नाम्ना सौख्यमिति प्रोक्तं सर्वेषां तु सनातनम् ।
सप्तभक्त्या विशालं तु तस्माद् वेदांशमायतम् ॥ १५५ ॥
त्रिभागचतुरश्रं तु मध्ये कूटं तु वाङ्गणम् ।
तद्बाह्ये भागमानेन परितोऽलिन्द्रमिष्यते ॥ १५६ ॥
द्विपञ्चविस्तृतायामं पार्श्वयोरङ्गणद्वयम् ।
बाह्ये मण्डपमेकांशं परितः कल्पयेद् बुधः ॥ १५७ ॥
त्रिभक्त्यैकेन विस्तारनिर्गमं मुखभद्रकम् ।
चतुराशीतिकं पादमाद्यङ्गे प्रविधीयते ॥ १५८ ॥
प्रमुखे वारमेकांशं नानावयवशोभितम् ।
सर्वालङ्कारसंयुक्तमेतदीश्वरकान्तकम् ॥ १५९ ॥
अष्टभक्त्या विशालं तु तस्मात् पूर्ववदायतम् ।
द्विभक्ति चतुरश्रं तु मध्ये कूटं तु वाङ्गणम् ॥ १६० ॥
तद्बाह्ये भागमानेन परितोऽलिन्द्रमिष्यते ।
पूर्ववत् पार्श्वयोः कूटं द्व्यंशेनाधिकमायतम् ॥ १६१ ॥
द्विभक्त्या मण्डपं बाह्ये परितः कल्पयेद् बुधः ।
चतुर्द्विभक्तिविस्तारनिर्गमं मुखभद्रकम् ॥ १६२ ॥
दशाधिकशतस्तम्भमाद्यङ्गे प्रविधीयते ।
सर्वालङ्कारसंयुक्तं श्रीभद्रं सर्वयोग्यकम् ॥ १६३ ॥
नवभक्त्या विशालं तु तस्मात् पूर्ववदायतम् ।
त्रिभक्तिचतुरश्रं तु मध्ये कूटं तु वाङ्गणम् ॥ १६४ ॥
तद्बाह्ये भागमानेन परितोऽलिन्द्रमिष्यते ।
द्विपञ्चभक्तिविस्तारदैर्घ्यं पार्श्वेऽङ्गणद्वयम् ॥ १६५ ॥

परितो मण्डपं द्व्यंशं तद्बाह्ये योजयेद् बुधः ।
पञ्चद्व्यंशविशालायामेन भद्रं मुखेऽमुखे ॥ १६६ ॥
त्र्यंशैकविपुलं दैर्घ्ये पार्श्वयोर्भद्रकद्वयम् ।
कर्णे लाङ्गलवत् कुड्यं विवृतस्तम्भसंयुतम् ॥ १६७ ॥
साष्टाविंशच्छतं पादमाद्यङ्गे प्रविधीयते ।
यथायुक्ति यथायोगं तथा युञ्जीत बुद्धिमान् ॥ १६८ ॥
सर्वतोभद्रकं नाम्ना सर्वालङ्कारसंयुतम् ।
एतान्यपि सुरादीनां योजयेत् तु विचक्षणः ॥ १६९ ॥
मण्डपानां तु विस्तारादायामं प्रविधीयते ।
जातिरूपं तु पूर्वोक्तं छन्दमेकं द्विभक्तिकम् ॥ १७० ॥
विकल्पं त्र्यंशकं प्रोक्तमाभासं चतुरश्रकम् ।
दण्डकं स्वस्तिभद्रं च पद्मं ककरभद्रकम् । १७१ ॥
षण्मुखं लाङ्गलं मौलिं जातिनामानुसारतः ।
प्रपामण्डपजातिस्तु युक्तितः पादसंयुता ॥ १७२ ॥
गृहविन्यासरङ्गाङ्गं तदुक्तं गृहमण्डपम् ।
प्रासादगर्भनालीवत् सालिन्द्राङ्गविशेषतः ॥ १७३ ॥
अधिष्ठानादिवर्गाढ्यं प्रासादाकारमण्डपम् ।
प्रासादगृहसाङ्गाङ्गं गृहप्रासादमण्डपम् ॥ १७४ ॥
मण्डपोपरि भूमिश्चेन्मालिकामण्डपं मतम् ।
इष्टकाभिः शिलाभिर्वा दारुभिर्दन्तलोहकैः ॥ १७५ ॥
सर्वत्र द्रव्यजातीनां मिश्रं मिश्रं विशेषितम् ॥ १७५½ ॥
सायतं (तु) चतुरश्रकं जलक्रीडयान्वितमथापि मण्डपम् ।

एकभौमकमनेकभौमकं योजनीयमवनीपतीच्छया ॥

संवृतं विवृतमङ्घ्रिभित्तिकं दिक्षु दिक्षु गतभद्ररूपकम् ।
मध्यरङ्गसहितं तु वाङ्गणं स्तम्भभित्तिकमुपर्युपर्यपि ॥

गुह्यवारणपराधिरोहणं द्वारि तत्र बहुयन्त्रकल्पकम् ।
वारिगर्भगजभूतहंसकं व्यालसिंहकपिसालभञ्जिकम् ॥
हर्म्यमण्डपसभामशीर्षकं कूटनीडगजतुण्डकोष्ठकम् ।
तोरणादिबहुजालकैर्युतं नासिकादिभिरलङ्कृतं पुनः ॥
मण्डपस्य पुरतोऽथ मध्यमे वा जलाशयमनेकयन्त्रकम् ।
इष्टकाभिरुपलैरलङ्कृतं सावगूढमपगूढवारिणाम्॥१८०३॥

एवं भूपानां जलक्रीडनार्थं प्रोक्तं यत्तन्मण्डपं रम्यदेशे ।
सालङ्कारं सर्वचित्रैर्विचित्रं स्त्रीसौभाग्यारोग्यभोग्यप्रदायि ॥
खदिरः खादिरो वह्निर्निम्बः सालः सिलिन्द्रकः पिशितः ।
तिन्दुकमथ राजादनहोममधूकास्तु पादपादपकाः ॥
एते देवद्विजनृपयोग्याः स्युः सर्वकर्मसु वै ।
स्तम्भाकृतयः सर्वे प्रोक्ताः पूर्वोदितास्तेषाम् ॥ १८३३ ॥
पिशितस्तिन्दुकवृक्षो निम्बो राजादनो मधूकश्च ।
सिलिन्द्रः स्तम्भरुजा वैश्यानां चापि शूद्राणाम् ॥१८४३॥
वृत्तं वा चतुरश्रं वाष्टाश्रं षोडशाश्रं च ।
स्तम्भाकृतयः प्रोक्तास्त्वक्साराः सर्वयोग्याः स्युः ॥
तालं च नालिकेरं क्रमुकं वेणुश्च केतकी चैव ।
इष्टशिलाभिर्वावृक्षैर्देवद्विजमहीपानाम् ॥ १८६३ ॥

आश्रमिणामप्युदितान्यावासानि हि सर्वाणि ।
नैव शिलाभिर्वणिजां शूद्राणां वासके योग्यम् ॥ १८७३ ॥
प्रासादाभिमुखे यान्यवरस्य श्रेष्ठमण्डपानि च वै ।
तानि विमानाद्यङ्गस्तम्भोत्तरवाजनानि सदृशानि ॥
अथ मुनिवसुनन्दांशैर्धर्मांशैर्कांशहीनानि ।
पूर्वोदितमानानि हि सर्वाण्यङ्गानि वा विधेयानि ॥ १८९३ ॥
आख्यातं मण्डपानां तान्येवोक्तानि दिक्प्रमाणं च ।
पञ्चचतुस्त्रिद्विगुणस्तम्भव्यासेन भित्तिविष्कम्भम् ॥
दारुस्तम्भव्यासात् पादोनं वा त्रिभागमर्धोनम् ।
कुड्यस्तम्भविशालं तेन विशालेन वा कुड्यम् ॥ १९१३ ॥
मध्याङ्गणस्य दिशि दक्षिणतोऽङ्घ्रिमूले
द्वारस्य दक्षिणयुते तालिपे तु केचित् ।
कोणे द्वितीयचरणान्वितके त्रिगर्भ-
स्थानं वदन्ति मुनयः खलु मण्डपानाम् ॥ १९२३ ॥
उक्तव्यासायामभागादलिन्द्रं
पूर्वेऽपूर्वे वाथ भक्त्या समन्तात् ।
भक्त्या वाध्यर्धः समन्तात (तु)कुर्याद्
देवानामुर्वीसुरोर्वीश्वराणाम् ॥ १९३३ ॥
प्रासादाङ्गं मालिकाङ्गं यथावत्
कुर्यात् कुड्यं मूलकुड्योपरिष्टात् ।
पादं पादानामुपर्येव योज्य-
मेकद्वित्रीण्यत्र भौमानि युक्त्या ॥ १९४ ॥

तत्तद्विस्तारायतांशैर्विधिज्ञैः
तेषां मानं पादबाह्ये तु केचित्।
केचिद् भित्तेर्मध्यमं तद् वदन्ति
शालाकारं वा सभाशीर्षकाङ्गम् ॥ १९५? ॥
(यत्तत् कुर्यान्मण्डपं वासयोग्यम् ॥?)
एकद्वित्रिचतुर्मुखानि च मुखे भद्राण्यभद्राणि का-
न्यूर्ध्वे कूटयुतानि मध्यकपदे रङ्गाङ्गणाढ्यानि वै ।
सर्वाण्यायतमण्डपानि चतुरश्राभाणि देवद्विज-
क्षोणीशायतने मतानि च विशां शूद्रेषु दीर्घं मतम् ॥

इति मयमते वस्तुशास्त्रे मण्डपलक्षणो नाम
पञ्चविंशोऽध्यायः ।

---

अथ षड्विंशोऽध्यायः ।

तैतलानां द्विजादीनां वर्णानां वासयोग्यकाः ।
एकद्वित्रिचतुस्सप्तद(शा ? शशाला)श्च षड्विधाः ॥ १ ॥
त्यक्ताजांशाः पुरोलिन्द्राः संयुक्ताः पिण्डभिन्नकाः ।
तासां हस्तैरयुग्मैश्च युग्मैर्विस्तारमायतम् ॥ २ ॥
उत्सेधं चाप्यलङ्कारं संक्षेपाद् वक्ष्यतेऽधुना ।
त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात् ॥ ३ ॥
त्रयोविंशचतुर्विंशद्धस्तान्ता रुद्रसंख्यया ।
एकशाला द्विशालाश्च ताः सर्वाः परिकीर्तिताः ॥ ४ ॥
सप्ताष्टहस्तादारभ्य द्वौ द्वौ हस्तौ प्रवर्धयेत् ।
एकोनविंशद्धस्तान्तं विंशद्धस्तं तु सप्तधा ॥ ५ ॥

द्विशालायास्त्रिशालाया वैपुल्यं परिकीर्तितम्।
विस्तारात् पादमाधिक्यमर्धाधिकमथापि वा॥ ६॥
त्रिपादं द्विगुणायामं तस्मात् पादार्धकं त्रिपात्।
त्रिगुणान्तप्रमाणं चैवायामाश्चाष्टधा स्मृताः॥ ७॥
सर्वे दैर्घ्यार्धकाणां(?) तु द्विगुणं तु नृणां मतम्।
द्विगुणाद्यायताः सर्वे विहाराश्रमवासिनाम्॥ ८॥
सर्वेषां सङ्गमोपेते द्विगुणाद्यायतं मतम्।
विस्तारसममुत्सेधं सपादं सार्धमेव वा॥ ९॥
त्रिपादं द्विगुणं चैव उत्सेधं पञ्चधा मतम्।
शान्तिकं पौष्टिकं चैव जयदं धनमद्भुतम्॥ १०॥
तैतलानां द्विजादीनां पाषण्ड्याश्रमिणामपि।
हस्त्यश्वरथयोधानां यागहोमादिशिल्पिनाम्॥ ११॥
एकशाला प्रशस्ता स्यात् स्त्रीणां रूपोपजीविनाम्।
दण्डकं मौलिकं चैव स्वस्तिकं च चतुर्मुखम्॥ १२॥
सामान्यं तैतलादीनां पूर्वोक्तानां चतुष्टयम्।
एकादिबहुभूम्यन्तं खण्डहर्म्यादिमण्डितम्॥ १३॥
अर्पितानर्पितं चैव प्रासादवदलङ्कृतम्।
पुरतः पार्श्वयोः पृष्ठेऽलिन्द्रं कुर्यात् समन्ततः॥ १४॥
नराणां च सुराणां च पाषण्ड्याश्रमिणां तथा।
पुरतो मण्डपोपेतं पृष्ठे पार्श्वे तु भद्रकम्॥ १५॥
मध्ये वासं तु देवानां पार्श्वे वासो भवेन्नृणाम्।
प्रागवागपरोदीच्यां पृथक्शाला प्रधानिका॥ १६॥

सर्वेषामपि जातीनां सामान्यमिति विद्यते ।
दक्षिणे पश्चिमे चोक्तशाला वैशेषिका नृणाम् ॥ १७ ॥
प्रागुदक्प्रागवाक्प्रत्यगुदग्गेहं तु लाङ्गलैः ।
स्वामिनो मरणं स्याद्धि श्रियै याम्ये प्रतीच्यपि ॥ १८ ॥
अवाक्प्रत्यगुदक् सम्पत् प्रागवागपरो जयः ।
दक्षिणे पश्चिमे हीनास्त्रिशालाः सर्वदोषकाः ॥ १९ ॥
लाङ्गलं गणिकादीनां शूर्पमुग्रोपजीविनाम् ।
लाङ्गले चैव शूर्पे च पृथक्शाला प्रधानिका ॥ २० ॥
शालाविरहितस्थाने कुड्यद्वारं प्रयोजयेत् ।
एकसन्धि द्विशालायास्त्रिशालाया द्विसन्धिकम् ॥ २१ ॥
उक्तानां दण्डकादीनां विन्यासं च वदाम्यहम् ।
विस्तारं तु त्रिधा कृत्वा चतुर्भागं तदायतम् ॥ २२ ॥
द्विभागं गृहविस्तारं वारमेकांशमग्रतः ।
आस्यं तत्खण्डदण्डाभं वासं सर्वजनार्हकम् ॥ २३ ॥
एतद् दण्डकमित्युक्तं शालानां क्षुद्ररूपकम् ।
विस्तारे चतुरंशे तु षडंशाधिकमायतम् ॥ २४ ॥
द्विभागं गृहविस्तारं द्व्यंशं चङ्क्रमणं भवेत् ।
शेषं पूर्ववदुद्दिष्टं दण्डकं तदुदीरितम् ॥ २५ ॥

गृहायते नन्दविभागभाजिते शरांशके दक्षिणभागमाधिकम् ।
अदक्षिणे वह्निपदं तदन्तरे विधीयतां द्वारमथैकशालके ॥
केचिद् द्वारं मध्यसूत्रस्य वामे चाहुः शिष्टं मानुषाणां निवासे ।
सर्वास्वेतास्वल्पशालासु शालाभागे कुर्यादायते द्वारमेकम् ॥

त्रिभागं गृहविस्तारं द्विगुणं तस्य दीर्घकम् ।
भागं चङ्क्रमणोपेतं मध्यमे चैकभाक्तिकम् ॥ २८ ॥
कुल्याभद्रारसंयुक्तं शेषं पूर्ववदाचरेत् ।
वंशमूले तु वासं स्याद् वंशाग्रे रङ्गमीरितम् ॥ २९ ॥
सर्वतः परितः कुड्यं रङ्गं पादस्य संयुतम् ।
भागेन पुरतोऽलिन्द्रं पार्श्वयोः पृष्ठतस्तु वा ॥ ३० ॥
प्रासादवदलङ्कुर्याद् दण्डकं तदुदीरितम् ।
तदेव मध्यमे रङ्गं वासौ वंशाग्रमूलयोः ॥ ३१ ॥
युक्त्यान्तस्तम्भसंयुक्तं वंशद्वारं न योजयेत् ।
शेषं पूर्ववदुद्दिष्टं दण्डकं तदुदीरितम् ॥ ३२ ॥
षडंशं विस्तृतं चैव द्वादशांशं तदायतम् ।
भागेन परितोऽलिन्द्रं शालाभागं द्विभागतः ॥ ३३ ॥
तत्समं परितोऽलिन्द्रं युक्त्यान्तःस्तम्भसंयुतम्
पार्श्वयोर्द्वित्रिभागेन शालायामे द्विवासकौ ॥ ३४ ॥
द्विचतुर्भागविस्तारायामं मध्ये तु रङ्गकम् ।
दण्डकं तदपि प्रोक्तं शेषं पूर्ववदाचरेत् ॥ ३५ ॥
व्यासेऽग्निभूतपातालनन्दांशैकद्विकत्रिभिः ।
चतुर्भिः पुरतोऽलिन्द्रं स्यादेकद्वित्रिशालके ॥ ३६ ॥

एतत् सर्वं दण्डकं जातिरूपं देवानां भूतैतलानां नृपाणाम् ।
पाषण्डादीनां विशां शूद्रकाणां योधानां रूपाङ्गनानां प्रशस्तम् ॥

एतदेव सभाकारशिरोयुक्तं तु मौलिकम्
तदेव काननोपेतं मौलिकं तदुदीरितम् ॥ ३८ ॥

छन्दं पूर्वोदितानां तु संमतं नैव योषिताम् ।
तदेव पुरतोभद्रं चतुर्ध्यंशेन निर्गमम् ॥ ३९ ॥
त्रासं नेत्रत्रयोपेतं स्वस्तिकं तद् विकल्पकम् ।
देवभूसुरभूपेषु योग्यं नैवान्त्यजन्मनाम् ॥ ४० ॥
तदेव मुखभद्रं तु यथा तत् पृष्ठतो भवेत् ।
ककरीवंशशालाश्रं चतुर्नेत्रसमन्वितम् ॥ ४१ ॥
अधिष्ठानादिवर्गाढ्यं प्रासादवदलङ्कृतम् ।
नासिकातोरणाद्यङ्गैर्युक्तं वातायनादिभिः॥ ४२ ॥
चतुर्मुखमिदं नाम्ना आभासमिति कल्पितम् ।
देवद्विजनृपाणां च संमतं सम्पदां पदम् ॥ ४३ ॥
एकादिपञ्चभूम्यन्तं दण्डकादिचतुष्टयम् ।
स्वामिचित्तवशान्न्यस्तस्थानविन्यासंसंयुतम् ॥ ४४ ॥
हस्त्यश्ववृषभादीनां प्रत्येकं वासपङ्क्तिकम् ।
सद्विचूलित्रिचूल्यङ्गं सप्रग्रीवं सतल्पकम् ॥ ४५ ॥
सपादं सार्धमुत्सेधं तत्समं वाभिधीयते ।
दण्डकं मौलिकं चैव यथेष्टदिशि वारणम् ॥ ४६ ॥
चतुरश्रे द्विशाले तु धर्मभागविभाजिते ।
भागेन बाह्यतो वारं द्व्यंशं गेहविशालकम् ॥ ४७ ॥
प्रमुखे वारमेकांशं मण्डपं नवभागिकम् ।
तदावृत्त्यैकतोऽलिन्द्रं शेषं चङ्क्रमणं भवेत् ॥ ४८ ॥
मुखगेहं बहिर्वारं लाङ्गलाभं यथा तथा ।
मुखचङ्क्रमणाद्यन्तर्विन्यासं चतुरश्रकम् ॥४९ ॥

मध्यरङ्गसमायुक्तं मुख्यगेहं द्विवासकम् ।
बाह्यचङ्क्रमणाद् बाह्ये मुखभद्रं द्विभागतः ॥ ५० ॥
चतुर्मुखसमायुक्तं द्विशालं तच्चतुर्मुखम् ।
तदेव पञ्चभागान्तमेकांशादि मुखायतम् ॥ ५१ ॥
द्वारं पूर्ववदुद्दिष्टं सर्वालङ्कारशोभितम् ।
मण्डपं बाह्यतोऽलिन्द्रं सायतं प्रविधीयते ॥ ५२ ॥
नेत्रत्रयसमायुक्तं दीर्घा चायतभद्रकम् ।
एतत् स्वास्तिकमित्युक्तं शेषं पूर्ववदाचरेत् ॥ ५३ ॥
तदेव द्विमुखोपेतं दण्डवक्रमिति स्मृतम् ।
सावकाशाङ्गणोपेतं मण्डपेन विना यदि ॥ ५४ ॥
शालाविरहितस्थाने कुड्यद्वारं प्रयोजयेत् ।
एकानेकतलोपेतं कुर्याद् रूपोपजीविनाम् ॥ ५५ ॥
व्यासायामेऽष्टधर्मांशे त्रिशाले द्व्यंशमङ्गणम् ।
त्रिपार्श्वेऽलिन्द्रमेकांशं द्व्यंशं शालाविशालकम् ॥ ५६ ॥
त्यक्तमध्यमपादं तद् द्व्यंशं तन्मुखभद्रकम् ।
षडाननसमोपेतं सप्रच्छन्नमजाङ्कणम् ॥ ५७ ॥
एकानेकतलोपेतं प्रासादवदलङ्कृतम् ।
द्वारादि पूर्ववन्मेरुकान्तं नामाग्रजीविनाम् ॥ ५८ ॥
व्यासे पङ्क्त्यर्कभागे तु पार्श्वयोः पृष्ठतस्तु वा ।
वारमेकांशतः कुर्याद् द्व्यंशं गेहविशालकम् ॥ ५९ ॥
प्रमुखे वारमेकांशं द्व्यंशं तन्मध्यमङ्गणम् ।
परितो वारमेकांशं द्विप्रच्छन्नमथापि वा ॥ ६० ॥

तारद्व्यंशाधिकायामं चतुराननमण्डितम्
प्रमुखे तु चतुर्व्यंशं निर्गतद्वारभद्रकम् ॥ ६१ ॥
पार्श्वयोर्वापरे मुख्यवासं स्याद् द्विललाटकम् ।
मौलिभद्रमिदं नाम्ना शेषं पूर्ववदाचरेत् ॥ ६२ ॥
त्रिपञ्चषोडशारत्नितारा द्वौ द्वौ प्रवर्धयेत् ।
आचतुर्विंशतेर्व्यासः पञ्चधोक्तस्त्रिशालके ॥ ६३ ॥
नवपङ्क्तिकरारभ्य द्विद्विहस्तविवर्धनात् ।
आपञ्चोत्तरषष्ठ्यन्तं षट्षष्ठ्यन्तं तु विस्तृतम् ॥ ६४ ॥
चतुःशालविशालाः स्युर्नवविंशतिसंख्यया ।
अद्य(?) द्विसप्तमानं तु संवृताङ्गणकान्वितम् ॥ ६५ ॥
विवृताङ्गणकं शेषं कुर्याद् यत्र यथोचितम् ।
आद्यं तु सर्वतोभद्रं द्वितीयं वर्धमानकम् ॥ ६६ ॥
तृतीयं स्वस्तिकं चैव नन्द्यावर्तं चतुर्थकम् ।
पञ्चमं रुचकं विद्याच्छालानामभिधानकम् ॥ ६७ ॥
तत्तदात्तविशालेन वीजं स्याच्चतुरश्रकम् ।
आत्तव्यासाद् द्विहस्तेनाधिक्यजात्यायतं मतम् ॥ ६८ ॥
चतुर्हस्ताधिकं छन्दं विकल्पं षट्कराधिकम् ।
आभासमष्टहस्तेनाधिक्यं दैर्घ्यमिति स्मृतम् ॥ ६९ ॥
अथ वैशेषिकायाममात्मांशेन विधीयते ।
आत्तव्यासं कर्मजातिर्द्विभागेनाधिकायतम् ॥ ७० ॥
चतुरंशाधिकं वीजाद् दीर्घं छन्दमिति स्मृतम् ।
षडंशदीर्घं विपुलाद् विकल्पमिति कथ्यते ॥ ७१ ॥

अष्टभागाधिकं व्यासादाभासं स्यात् तदायतम्।
षडंशेन विशाले तु नेष्टमाभासदैर्घ्यकम् ॥ ७२ ॥
सर्वतोभद्रविन्यासं संक्षेपाद् वक्ष्यतेऽधुना।
वासव्यासेऽष्टभागे तु द्विभागं मध्यमाङ्गणम् ॥ ७३ ॥
तदर्धं परितो मार्गं द्विभागं गेहविस्तृतम्।
चतुष्कर्णे सभास्थानं सभामध्ये तु वासकम् ॥ ७४ ॥
पूर्वापरगृहे वापि स्वाम्यावासं प्रशस्यते।
सर्वतः कुड्यसंयुक्तं कुल्याभद्वारसंयुतम् ॥ ७५ ॥
बहिर्जालककुड्यं स्यादन्तार्निर्वृत्तपादकम्।
पक्षशालांशके द्वारं मुखं पूर्वेऽपरत्र वा ॥ ७६ ॥
जालकं च कपर्दं च बाह्येऽबाह्ये तथैव च।
क्रकरीवंशशालाश्रमष्टास्यं भद्रसंयुतम् ॥ ७७ ॥
चतुर्दिग्भद्रसंयुक्तमेकैकार्धसभामुखम्।
अन्तर्भद्रसभाकर्णे शङ्खसङ्खुपान्वितम् ॥ ७८ ॥
मुखपट्टिकयोपेतमध्यकोटिसमन्वितम्।
परितो दण्डिकावारं शिखरे तीव्रपट्टिका ॥ ७९ ॥
प्रस्तरं नासिकायुक्तमन्तरप्रस्तरान्वितम्।
समकायं समद्वारं समवंशं तु कारयेत् ॥ ८० ॥
विपरीतमनर्थाय भवेदेव न संशयः।
मुक्तमुक्ततलं तत्र मण्डपक्रियया़न्वितम् ॥ ८१ ॥
एकनेकतलोपेतं प्रासादवदलङ्कृतम्।
देवद्विजनृपाणां च वासयोग्यं सनातनम् ॥ ८२ ॥

सर्वासामपि शालानामेतत् सामान्यमीरितम् ।
हस्तच्छेदप्रवृद्ध्या वा हान्या पूर्णं यथा कुरु ॥ ८३ ॥
कर्करीकर्णवक्रान्ता शालावासचतुष्टया ।
अष्टास्योर्ध्वतलग्रीवा सस्थूपिसमवंशका ॥ ८४ ॥
भद्रोर्ध्वमुखकूटं स्यादन्तर्द्वारं बहिर्मुखम् ।
एतत्तु सर्वतोभद्रं राज्ञामावासयोग्यकम् ॥ ८५ ॥
वासव्यासेऽर्कभागे तु द्विभागं मध्यमाङ्गणम् ।
परितो मार्गमेकांशमन्तर्वारमथांशकम् ॥ ८६ ॥
शालाव्यासं द्विभागेन बाह्यवारं तदर्धकम् ।
एतत्तु सर्वतोभद्रमलङ्कारादि पूर्ववत् ॥ ८७ ॥
व्यासे द्विसप्तभागे तु द्विभागं मध्यमाङ्गणम् ।
परितो वारमेकांशं द्व्यंशं शालाविशालकम् ॥ ८८ ॥
तदर्धं बाह्यवारं तु पृथुवारं द्विभागतः ।
चतुष्टयानां शालानां शिखरं तु सभाकृति । ८९ ॥
मध्ये नासिसमायुक्तं भद्रप्रभृति पूर्ववत् ।
सर्वासामपि शालानां त्यजेन्मध्यस्थपादकम् ॥ ९० ॥
त्रितलादितलोपेतं खण्डहर्म्याभिमण्डितम् ।
एतत्तु सर्वतोभद्रं देवद्विजमहीभृताम् ॥ ९१ ॥
व्यासे द्विरष्टभागे तु चतुरंशमथाङ्गणम् ।
पूर्ववद् योजयेच्छेषं प्रहीणशिखराकृति ॥ ९२ ॥
नासिकातोरणाद्यङ्गैर्जालकैश्च समन्वितम् ।
त्रितलादितलोपेतं प्रासादवदलङ्कृतम् ॥ ९३ ॥

तले तले तु सोपानं मध्ये मध्ये तु मण्डपम् ।
विवृतं वाङ्गणं सर्वं युक्त्यानुक्तं प्रयोजयेत् ॥ ९४ ॥
एतत्तु सर्वतोभद्रं नृपाणामधिवासकम् ।
अष्टादशांशके व्यासे द्विभागं मध्यमाङ्गणम् ॥ ९५ ॥
परितो मार्गमेकांशमन्तर्वारमथांशकम् ।
शालाव्यासं द्विभागेन बाह्यवारं तदर्धकम् ९६ ॥
द्विभागं पृथुवारं स्याद् बाह्यवारमथांशकम् ।
शालाकारं सभाकारं यथा वा शिखरं तु तत् ॥ ९७ ॥
त्रितलादितलोपेतं खण्डहर्म्याभिमण्डितम् ।
पूर्ववद् योजयेच्छेषं यथायुक्ति यथारुचि ॥ ९८ ॥
स्वामिचित्तवशान्न्यस्तस्थानविन्यासंसंयुतम् ।
अन्यत् प्रासादवत् सर्वमलङ्कुर्याद् विचक्षणः ॥ ९९ ॥
एतत्तु सर्वतोभद्रं नृपेशभवनं स्मृतम् ॥ ९९३ ॥

शालाजातिस्तच्छिरोयुग् विमानं
मुण्डाकारं शीर्षकं हर्म्यमेतत् ।
नानाकाराङ्गान्वितानेकभूमा
माला छन्दा स्यात् तु सा मालिकाख्या ॥ १००३ ॥

व्यासे षड्स्वंशके त्र्यंशकेऽष्टां-
शार्कैर्मन्वंशैश्चदैर्घ्यं तदंशैः ।
त्र्यंशकेऽष्टांशार्कैर्मन्वंशैर्दीर्घ्यं तत्तदंशै(?) ।
एकद्व्यंशं मुख्यवासस्य वारं
दैर्घ्याष्टांशैर्वारमेकं च सार्धम् ॥ १०१३ ॥

वर्धमानस्य विन्यासं वक्ष्ये संक्षेपतः क्रमात् ॥ १०२ ॥

व्यासे षडंशके तत्र द्व्यंशं शालाविशालकम् ।
द्विभागमङ्गणं बाह्ये सर्वतः कुड्यसंयुतम् ॥ १०३ ॥

प्रमुखे मुख्यवासस्य भागं चङ्क्रमणं भवेत् ।
मध्यभित्तिसमायुक्तं कुल्याभद्वारसंयुतम् ॥ १०४ ॥

अपरे दीर्घशाला स्याद् द्विनेत्रोत्तुङ्गसंयुता ।
ईषन्निम्नोन्नतात्प्राविशालाद् दैर्घ्यानतान्विता(?) ॥ १०५ ॥

पक्षके द्वे तु शाले तु वंशं निम्ने द्विवक्रकौ(?) ।
एकैकदिशि निष्क्रान्तं द्विभागं मध्यवारणम् ॥ १०६ ॥

ह्रस्वपादसमायुक्तं यथालङ्कारकं तु तत् ।
शङ्खावर्तं तु सोपानं कर्णे द्व्यंशेन योजयेत् ॥ १०७ ॥

नासिकातोरणस्तम्भजालकादिविराजितम् ।
प्रासादवदलङ्कुर्यादनुक्तं चात्र पूर्ववत् ॥ १०८ ॥

एकद्वित्रितलोपेतं नोदग्द्वारं महीभृताम् ।
तदेवांशेन वारं तु विवृतस्तम्भभित्तिकम् ॥ १०९ ॥

मुख्यगेहार्धदाक्षिण्ये मूलवंशोन्नतोन्नतम् ।
यथेष्टदिशि भद्राङ्गं यथेष्टदिशि वासकम् ॥ ११० ॥

दण्डिकावारसंयुक्तं प्रासादवदलङ्कृतम् ।
द्वारतोरणनासीभिस्तथा वेदिकजालकैः ॥ १११ ॥

यथारुचि यथाशोभं तथा कुर्याद् विचक्षणः ।
एतत्तु वर्धमानं स्याच्चतुर्णामपि शंसितम् ॥ ११२ ॥

व्यासे दशांशके तत्र द्विभागमङ्गणं भवेत् ।
तद्बहिर्वारमेकांशं शालाव्यासं द्विभागिकम् ॥ ११३ ॥
तदर्धं तु बहिर्वारं द्वारं भद्रसमन्वितम्।
कूटकोष्ठादिसर्वाङ्गं यथायुक्ति यथारुचि ॥ ११४ ॥
एतत्तु वर्धमानं स्याच्चतुर्णामपि शंसितम् ।
अथवा तद्बहिर्वारं द्व्यंशं व्यासे दशांशके ॥ ११५ ॥
मुक्तमुक्ततलं तत्र मण्डपक्रिययान्वितम् ।
यथोचितमलङ्कारमुपर्युपरि तत्क्रमात् ॥ ११६ ॥
मुखभद्रं विना तत्र शेषं प्रागुक्तवन्नयेत् ।
समं त्रिपादमर्धं वा मुखमण्डपमिष्यते ॥ ११७ ॥
शेषं प्रागुक्तवन्नेयं विप्रादीनां प्रशंसितम् ।
त्रिचतुष्पञ्चभौमं स्याद् वर्धमानं मनोहरम् ॥ ११८ ॥
द्वादशांशे विशाले तु द्विभागं मध्यमाङ्गणम् ।
शालाव्यासं द्विभागं तद्बाह्यालिन्द्रं द्विभागतः ॥ ११९ ॥
तद्बहिर्वारमेकांशं स्तम्भं कुड्यं यथोचितम् ।
पार्श्वयोस्तद्बहिर्द्व्यंशैकांशविस्तारनिर्गमा ॥ १२० ॥
सवारमुखपट्टयङ्गनेत्रशालाविनिर्गता ।
पुरतः पार्श्वयोर्नेत्रशालेऽलिन्द्रात् तु पूर्ववत् ॥ १२१ ॥
तयोर्मध्ये चतुर्द्व्यंशे द्वितले वा स्थलान्वितम् ।
वारं स्यात् त्रितले तत्र तत्र शाला चतुस्स्थले ॥ १२२ ॥
अपरे कर्णकूटे द्वे कर्तव्ये पञ्चभूमिके ।
तयोर्मध्ये चतुर्द्व्यंशे षट्तलेऽर्धसभामुखम् ॥ १२३ ॥

पार्श्वयोर्नेत्रकूटे द्वे मुख्यधाम्नस्तु षट्तले ।
पुरतः कर्णकूटे द्वे सोपानं स्यात् तदन्तरे ॥ १२४ ॥
तत्पुरः कर्णकूटे द्वे कर्तव्ये तु चतुस्स्थले ।
शाला पञ्चतले कार्या दैर्घ्ये तत्रैव पञ्जरे ॥ १२५ ॥
द्विभागविपुलायामे कर्तव्ये पार्श्वयोस्तु ते ।
अङ्गणं मण्डपं चोर्ध्वे तदूर्ध्वे तलवारयुक् ॥ १२६ ॥
वारं नेत्रसमायुक्तं वामे सोपानसंयुतम् ।
मुखचङ्क्रमणे गुह्यसोपानं स्यात् तले तले ॥ १२७ ॥
पृष्ठेऽष्टद्व्यंशविस्तारनिर्गमं भद्रशोभितम् ।
तदंशे पार्श्वयोर्वक्रे वारं स्यात् त्रितलान्वितम् ॥ १२८ ॥
द्व्यंशैकांशैकविस्तारनिर्गमा पञ्चभूमिके ।
सवारमुखपट्ट्यङ्गपृष्ठशालाविनिर्गता ॥ १२९ ॥
पार्श्वयोर्द्वि(त्रि ? द्वि)भागेन कूटौ द्वौ तु चतुस्स्थले ।
पुरतो मण्डपं तत्र वासव्याससमन्वितम् ॥ १३० ॥
द्वितलोपरि भद्राङ्गी शाला नेत्रसमन्विता ।
वास्तूनां तु चतुस्सूत्रं यथाशास्त्रं प्रसारयेत् ॥ १३१ ॥
मध्ये स्तम्भं सुसंस्थाप्य पार्श्वे (द्वय ? द्वार)युतं तु तव
कर्तव्यं विधिना तज्ज्ञैः कम्पद्वारं तदुच्यते ॥ १३२ ॥
प्रासादवदलङ्कुर्यात् स्तम्भाद्यङ्गं तले तले ।
सप्तभौमं नृपेशस्य मन्दिरं वर्धमानकम् ॥ १३३ ॥
चतुर्दशांशके व्यासे द्विभागं मध्यमाङ्गणम् ।
परितो वारमेकांशं शालाव्यासं द्विभागिकम् ॥ १३४ ॥

द्विभागं पृथुवारं स्याद् बाह्यवारं तदर्धकम् ।
परितो द(धि?ण्डि)कावारं मुष्टिबन्धादिशोभितम् ॥
चूलहर्म्यादिकं कुड्यं महावारमुपर्यपि ।
कूटकोष्ठादिसर्वाङ्गं युक्त्या तत्र प्रयोजयेत् ॥ १३६ ॥
एतत्तु वर्धमानं स्यान्नोदग्द्वारं महीभृताम् ।
व्यासे द्विरष्टभागे तु द्विभागं मध्यमाङ्गणम् ॥ १३७ ॥
तावत् स्याद् गृहविस्तारं परितः कुडयसंयुतम् ।
द्विभागं पृथुवारं स्यादन्तः स्तम्भं यथोचितम् ॥ १३८ ॥
तद्बहिर्वारमेकांशं पृथुवारं द्विभागतः ।
स्तम्भं कुडयं यथायुक्ति यथाशोभं तथाचरेत् ॥ १३९ ॥
दण्डिकावारसंयुक्तं पार्श्वे पृष्ठे सभद्रकम् ।
पार्श्वयोर्नेत्रशाले द्वे द्वे महावारसंयु(तम्?ते) ॥ १४० ॥
पादं पादाश्रयं पादं पादार्धाश्रयमेव वा ।
किञ्चिदाश्रयमेवं वानाश्रयं त्रिपदां पदम् ॥ १४१ ॥
वारस्थलं चूलहर्म्ये कर्तव्यं स्यात् तलं तलम् ।
गोपानं च लुपाश्चैव वक्रस्तम्भं च नाटकम् ॥ १४२ ॥
मुष्टिबन्धं च निर्यूहवलभी च कचग्रहम् ।
यत्र यत्रोचितं तत्र योजयेत् तद् विचक्षणः ॥ १४३ ॥
सभा वा मण्डपाकारं मालिकाकारमेव वा ।
एतासामपि शालानामङ्गणं कारयेद् बुधः ॥ १४४ ॥
मण्डपस्य तु मध्ये तु स्तम्भं नैव प्रयोजयेत् ।
मण्डपं पुरतस्तस्य वासव्याससमं तु वा ॥ १४५ ॥

त्रिपादं वा तदर्धं वा युक्त्यान्तःस्तम्भसंयुतम् ।
एकद्वित्रितलोपेतं मालिकाभं यथा तथा ॥ १४६ ॥
विवृतस्तम्भसंयुक्तं वासालिन्द्रान्वितं तु वा ।
अन्तःसोपानसंयुक्तमनुक्तं चात्र पूर्ववत् ॥ १४७ ॥
त्रितलाद्यानवतलमेकादशतलं तु वा ।
एतत्तु वर्धमानं स्याद् भूपेन्द्राणां विशेषतः ॥ १४८ ॥
नन्द्यावर्तस्य विन्यासमलङ्कारमथोच्यते ।
व्यासे षडंशके तत्र द्विभागं मध्यमाङ्गणम् ॥ १४९ ॥
शालाव्यासं द्विभागं स्यात् तन्मानं तु चतुष्टयम् ।
बाह्यवारं च कुड्यं च नन्द्यावर्तसमाकृति ॥ १५० ॥
दिश्यथैकौ नतद्वारं(?) शाला वाथ चतुष्टयम् ।
जालकं च कवाटं च बाह्येऽबाह्ये तथैव च ॥ १५१ ॥
सर्वतः कुड्यसंयुक्तं मुख्यगेहं कभित्तिभाक् ।
कुल्याभद्वारसंयुक्तं मुखचङ्क्रमणं भवेत् ॥ १५२ ॥
अन्तर्विवृतपादं स्याद् बाह्ये कुड्यावृतं तु तत् ।
दण्डकावारसंयुक्तं प्रासादवदलङ्कृतम् ॥ १५३ ॥
चतुर्णामुदितं वैश्यशूद्रयोः प्राग्दिगाननम् ।
तदेवांशावृतालिन्द्रं बहिर्द्वारं प्रशोभितम् ॥ १५४ ॥
अधिष्ठानाङ्घ्रिकादीनां पूर्ववद् योजयेद् बुधः ।
एकद्वित्रितलोपेतं मुण्डप्रासादकानितव(?)॥ १५५ ॥
चतुर्णामपि वर्णानां योजयेत् तद्विचक्षणः ।
व्यासे दशांशके तत्र द्विभागं मध्यमाङ्गणम् ॥ १५६ ॥

परितो वारमेकांशं शालाव्यासं द्विभागतः ।
बाह्यतोऽलिन्द्रमेकांशं भद्रप्रभृति पूर्ववत् ॥ १५७ ॥
यथायुक्ति यथाशोभं तथा हर्म्याङ्गमण्डितम् ।
षट्षडंशे विशाले तु द्विभागं मध्यमाङ्गणम् ॥ १५८ ॥
द्व्यंशं शालाविशालं स्यान्मुखगेहं कभित्तिभाक् ।
पृथुवारं द्विभागं (स्यात्) तद्बाह्ये तु समन्ततः ॥ १५९ ॥
परितोऽलिन्द्रमेकांशं स्तम्भं कुड्यं यथेष्टतः ।
सालिन्द्रं चूलहर्म्याङ्गं यथायुक्ति यथारुचि ॥ १६० ॥
द्वारं च मुखभद्रं चाप्यधिष्ठानादि पूर्ववत् ।
चतुष्टयानां शालानां मध्यवंशोर्ध्वमस्तकम् ॥ १६१ ॥
पुरेऽपुरे भवेत् कूटं पक्षशालाननान्वितम् ।
नन्द्यावर्ताकृतिश्चाथ यथायुक्तं चतुर्मुखम् ॥ १६२ ॥
ऊर्ध्वोर्ध्वमङ्गणं कुर्यात् पक्षशालासमोपरि ।
सभा वा मण्डपं वापि मालिका चाङ्गणक्रिया ॥ १६३ ॥
त्रितलादि तलोपेतमूहप्रत्यूहसंयुतम् ।
द्विजानां च महीपानामेतत् प्रासादकं हि तत् ॥ १६४ ॥
चतुर्दशांशके व्यासे द्विभागं मध्यमाङ्गणम् ।
परितो मार्गमेकांशं द्विभागं गेहविस्तृतम् ॥ १६५ ॥
पृथुवारं द्विभागं स्याद् युक्त्यान्तः स्तम्भसंयुतम् ।
तद्बहिर्वारमेकांशं कुड्यस्तम्भादिमण्डितम् ॥ १६६ ॥
चतुर्दिशाननोपेतं नन्द्यावर्तसमाकृति ।
ऊर्ध्वशालास्तथाष्टस्याच्चतुरस्याद् व्यवस्थिता(?) ॥ १६७ ।

द्वादशास्यसमायुक्तमूर्ध्वाधस्ताद् विशेषतः ।
चतुर्दिक्षु सभद्राङ्गद्वारशालकशोभितम् ॥ १६८ ॥
अनुक्तं हि यथा सर्वं पूर्ववत् कारयेद् बुधः ।
व्यासे द्विरष्टभागे तु द्विभागं मध्यमाङ्गणम् ॥ १६९ ॥
शालाव्यासं द्विभागेन पृथुवारं तु तत्समम् ।
तद्बहिर्वारमेकांशं तद्बहिर्वारमेकतः ॥ १७० ॥
सालिन्द्रं चूलहर्म्याङ्गं यथायुक्ति यथारुचि ।
तस्योपरिगता शाला चतुष्कशिरसा सभा ॥ १७१ ॥
त्रितलाद्यानवतलं भूपभूसुरयोग्यकम् ।
द्वाराणि भित्तयः सर्वे ह्युत्तराद्या ह्यनुक्रमात् ॥ १७२ ॥
प्रासादवदलङ्कुर्यान्नन्द्यावर्तं तु जालकम् ।
यथायुक्ति यथाशोभं तथा कुर्याद् विचक्षणः ॥ १७३. ॥
ऊहप्रत्यूहसर्वाङ्गैर्गेहालङ्कारमिष्यते ।
व्यासे षडंशके तत्र स्वस्तिके द्व्यंशमङ्गणम् ॥ १७४ ॥
तावच्छालाविशालं स्यात् कुल्याभद्रारसंयुतम् ।
पृष्ठे तु दीर्घकोष्ठं स्यात् पुरतः कोष्ठकं तथा ॥ १७५ ॥
पक्षके कर्करीशाला मुखपट्टिकयान्विता ।
विना पट्टिकया पृष्ठे कोष्ठकं पृष्ठसङ्गतम् ॥ १७६ ॥
दण्डिकावारसंयुक्तं षण्णेत्रं भद्रसंयुतम् ।
अन्यत् प्रासादवत् सर्वमलङ्कुर्याद् विचक्षणः ॥ १७७ ॥
प्राङ्मुखं स्वस्तिकं वैश्यशूद्रयोः संमतं बुधैः ।
तदेवांशावृतालिन्द्रं खण्डहर्म्याभिमण्डितम् ॥ १७८ ॥

पूर्ववद् भद्रसंयुक्तमलङ्कारादि पूर्ववत् ।
द्विःषडंशे(श ? ऽथ) मन्वंशे षोडशांशे यथेष्टतः ॥ १७९ ॥

अङ्गणं च बहिर्वारं पृथुवारमलिन्द्रकम् ।
शालाव्यासं द्विभागेन सर्वतः परिकल्पयेत् ॥ १८० ॥

द्वारं च स्तम्भकुड्यं च भद्रं युक्त्या प्रयोजयेत् ।
यथायुक्ति यथाशोभं तथा हर्म्याङ्गसंयुतम् ॥ १८१ ॥

शालाकारं सभाकारं हर्म्याङ्गं वाथ शीर्षकम् ।
एतत् स्वस्तिकमित्युक्तमनुक्तं चात्र पूर्ववत् ॥ १८२ ॥

निष्पट्टाः कोटिसंयुक्ताः कर्णे सोपानसंयुताः ।
रुचिकाख्या विचित्राङ्गा नोदग्द्वाराः प्रकीर्तिताः ॥ १८३ ॥

पाषण्डिनां द्विजादीनां सुराणां वासयोग्यकाः ।
चतुर्णामुदितं राज्ञां सर्वमुर्वीदिवौकसाम् ॥ १८४ ॥
वैश्यानामुदितं सर्वं शूद्राणां सम्मतं बुधैः ॥ १८४½ ॥

उक्तव्यासेनान्विता दीर्घहीना
वेदाश्राभास्ताः सुराणां द्विजानाम् ।
दानादीनां सर्वपाषण्डिकानां
चातुश्शालाः संमताः सद्भिरेव ॥ १८५½ ॥

ए(ते ? तद्) वदन्ति मुनयो विपुले नवांशे
वस्वंशके मुनिपदे रसभागिके तु ।
द्व्यंशं गृहस्य विपुलं त्वथ पञ्चभागे
शालविशालमिह भागमितिक्रमेण ॥ १८६½ ॥

अष्टाष्टहस्तविस्तृतं द्विगुणायतं च
द्विद्वारि पङ्क्तिवदनं द्वयमङ्गणं च।
षट्सन्धिकं भवनवत् परिमण्डनीयं
तत् सप्तवारमवनीसुरमन्दिरं स्यात्॥ १८७३ ॥

व्यासे पञ्चांशे नवांशायतं स्यात्
षड्भागे रुद्रांशकैः सप्तभागे।
द्विःषड्भागैरष्टभागे नवांशे
(द्विस्सप्तांशैः) षोडशांशैस्तु दैर्घ्यम्॥ १८८३ ॥

एवं पञ्चैवायतं सप्तशाले
पूर्वोक्तव्यासांशके पङ्क्तिभागे।
दैर्घ्यं सैकार्कैर्विकारैः सप्तसप्त-
धर्मांशैर्विंशत्त्रयोविंशदंशैः॥ १८९३ ॥

राज्ञामुदीरितमशीतिकरैर्विशाले
दैर्घ्यं (तु) तत्त्रिगुणमर्कललाटयुक्तम्।
त्रिद्वारि चाङ्गणगुणान्वितमष्टसन्धि
द्विःपञ्चशालमथ हर्म्यमि(ति?व) प्रयोज्यम्॥

वासत्र्यंशं सार्धभागं ह्यलिन्द्रं
त्र्यंशैकांशं वा तदर्धं प्रवेशम्।
बाह्येऽबाह्ये नालनीप्रं तदर्धं
शालानां स्यादत्र सामान्यमेतत्॥ १९१३॥

निरङ्गणं कर्णगताङ्गणान्वितं
बहुप्रवेशं बहिराननान्वितम्।

अन्तर्बहिर्वक्रयुतं ह्यसीमकं
वासं न सामान्यगताङ्गणान्वितम् ॥ १९२३ ॥

हस्तस्तम्भतुलादिकान् नरगृहे युञ्ज्यादयुग्मं यथा
युग्मायुग्मकसङ्ख्यया सुरगृहे युञ्जीत हस्तादिकान् ।
मध्यद्वारमनिन्दितं सुरमहीदेवक्षितीशालये
शेषाणामुपमध्यमेव विहितं तद् संपदामास्पदम् ॥ १९३३ ॥

गर्भं कुर्यात्क्षेत्रके भित्तिभागे
पादाधाराच्छ्वभ्रकाधः क्रमेण ।
मध्यस्य स्याद् वामभागे गृहे वा
शालानां स्यान्मुख्यधामन्यवश्यम् ॥ १९४३ ॥

भित्तिव्यासेऽष्टांशके चातुरंशं
बाह्येऽबाह्ये तत्रिभागं विहाय ।
मध्ये गर्भं योजनीयं सुराणां
विप्रादीनां मन्दिरे निन्दितं तत् ॥ १९५३ ॥

वंशद्वारं नैव विप्रादिकानां
वर्णानामावासके योजनीयम् ।
पाषण्ड्यादीनां मुनीनां गृहे तद्
वंशद्वारं योजनीयं न दूष्यम् ॥ १९६३ ॥

आद्यमथात्तविशालं त्रिगुणायामं ततः प्रवृद्धिः स्यात् ।
व्यासद्विगुणे त्रयोविंशति यावत् तावत्तु सैकदशसङ्ख्या॥

पुरतो भद्रसमेतं कर्णसभाकोष्ठनीडमण्डितकम् ।
पृष्ठे वारयुतं वा(पि ! द्वि)ललाटं गर्भकूटसमम् ॥ १९८३ ॥

एकद्वित्रितलाढ्यं पुरतः परतो विचित्रनास्यङ्गम् ।
एतद् विहारशालं प्रासादवदेव करणीयम् ॥ १९९३ ॥
सर्वासामपि वक्ष्ये पादायामं तु तस्य विष्कम्भम् ।
सार्धद्विहस्तमादि त्रिभिरथ षड्भिः कराग्रजर्घ्या तु ॥
सार्धत्रिचतुर्हस्तावधिकं यावन्नवाङ्घ्रिकायामम् ।
व्यासं षडङ्गुलं स्यात् तस्मादर्धैकमात्रवृद्ध्या तु ॥ २०१३ ॥
दश च चतुर्दशमात्रं यावन्नवधा विशालं स्यात् ।
पूर्वोदितमानं वा योज्यं युक्तिक्रमेण विद्वद्भिः ॥ २०२३ ॥
स्वव्यासकरं त्रिगुणं कृत्वा वसुभिर्हरेत्तु तच्छेषम् ।
ध्वजधूमसिंहश्वावृषखरगजवायसाश्च योनिगणाः ॥२०३३॥
एषु ध्वजमृगवृषभेभाः शुभयुक्ता न शोभनास्त्वन्ये ॥

सैकत्रिंशद्धस्तविस्तारकाभ्यां
द्वाभ्यां द्वाभ्यां वर्धयेत् तत् कराभ्याम् ।
शालाबाह्ये सैकषष्ट्यन्तमाना-
भीष्टायामा संमता स्यात् खल्लूरी ॥ २०५ ॥
बहिरबहिरभीष्टा कुड्यपादाङ्गशोभा
शिखरमपि लुपारूढान्वितं मण्डपं वा ।
अमरनरविमानाद्यावृता सा खल्लूरी
भवनतलविहीनैकद्विभूमिप्रयुक्ता ॥ २०६ ॥
प्रथमावरणे द्वितीयके वा
परभागे सदनं तु योषिताम् ।
निर्ऋतौ सूतिगृहं च वर्चसः
पवनादीन्दुदिक्षु वाङ्गनागृहम् ॥ २०७ ॥

यमदिशि भोजनशाला सोमे धनसञ्चयावासम्।
अग्नौ धान्यागारं खे पक्तिर्व्यञ्जनानि तत्रैव ॥ २०८ ॥

आराधनगृहमीशे कूपं तत्रोदितौ स्नानम्।
यस्मिन् यदुक्तमुचितमन्यानि हि तत्र संप्रयोज्यानि ॥

द्वाराणि च कुड्यानि च युक्त्या तु स्वामिवाञ्छवशात्।
अन्यच्छेषं सर्वं कुर्यादुक्तिक्रमेण दृढतरधीः ॥ २१० ॥

अपिच शिखिनि गोष्ठं नैर्ऋतेऽजाविकानां
पवनदिशि निवासं माहिषं चैशकोणे।
भवति तुरगशाला नागशाला च तस्मिन्
दिशि च दिशि च सर्वे वाहना द्वारवामे ॥२११॥

सामान्यं स्यादेतदुक्तं चतुर्णां
वासे राज्ञां योजनीयं विशेषम्
त्रिप्राकारं च त्रिपङ्क्ति त्रिभोगं
शेषाणां चाप्युक्तनीत्या त्रयाणाम् ॥ २१२ ॥

एकद्वित्रीण्यत्र सालानि नृणां
पञ्च त्रीण्येकादि देवालयेषु।
यत्तत् प्रोक्तं धाममानेन पूर्वं
तत्रैवायोज्यं विधिज्ञैर्नराणाम् ॥ २१३ ॥

इति मयमते वस्तुशास्त्रे शालाविधानं नाम
षड्विंशोऽध्यायः।

---

## अथ सप्तविंशोऽध्यायः ।

वर्णानां गृहविन्यासलक्षणं वक्ष्यतेऽधुना ।
चतुर्दण्डात् समारभ्य द्विद्विहस्तविवर्धनात् ॥ १ ॥

त्रिंशद्धस्तावधिर्यावदेकैकं गृहमानकम् ।
क्षुद्राणामष्टधा प्रोक्तं मध्यमानां विधीयते ॥ २ ॥

अष्टदण्डात् समारभ्य द्विद्विहस्तविवर्धनात् ।
द्वात्रिंशद्दण्डपर्यन्तं गृहाणां मानमिष्यते ॥ ३ ॥

अष्टादिशतदण्डान्तं दण्डाढ्यामुत्तमे क्रमात् ।
वाटभित्तेरिदं मानं तदभ्यन्तरतो गृहम् ॥ ४ ॥

चतुरश्रं द्विजानां च नृपाणां च विशेषतः ।
अष्टषट्चतुरंशेन दैर्घ्यं स्यात् क्षत्रियादिषु ॥ ५ ।

हीनं षोडशहस्तेभ्यो गृहमानं न कारयेत् ।
नवाष्टसप्तषड्ढस्तैरुत्तुङ्गात्तुङ्गमानतः ॥ ६ ॥

त्रिचतुर्भागविस्तारा पादोनाग्रविशालका ।
छत्रशीर्षकतुल्याभा छत्रनासीविभूषिता ॥ ७ ॥

चतुर्दिक्षु चतुर्द्वारोपेता तल्पसमायुता ।
द्वारगोपुरसंयुक्ता नानावयवशोभिता ॥ ८ ॥

बहिष्टात् परिघोपेता सर्वरक्षासमन्विता ।
वाटभित्तिरिति प्रोक्ता गृहबाह्यसमावृता ॥ ९ ॥

मृण्मया वा लुपारूढा तृणादिच्छादनान्विता ।
खल्लूरिका वा कर्तव्या वेदिकापादशोभिता ॥ १० ॥

गृहक्रिया हि द्विविधा भिन्नाभिन्नप्रकारतः।
भिन्नं च पिण्डभेदं च वक्ष्ये स्फुटतरं यथा ॥ ११ ॥

असन्धिकं भिन्नगृहं ससन्धिकं
ह्यभिन्नकं भिन्नगृहेषु तेषु वै।
चतुर्गृहं दिक्षु गतं प्रधानकं
विदिक्षु वा मण्डपकं खलूरिका ॥ १२ ॥

स्याद् वाटभित्तेरबहिः पृथग् गृहं
त्रयं द्विकं वैकमसम्पदां पदम्।
तस्माच्चतुश्शालमनिन्दितं परं
सविस्तरं तस्य तु मानमुच्यते ॥ १३ ॥

नीचानां नीच (तिष्ठानां ? मानं स्यात्) श्रेष्ठानां श्रेष्ठमुच्यते
श्रेष्ठमानं निकृष्टानां सर्व (मानं ? दा न) प्रयुज्यते ॥ १४ ॥

क्वचिदिष्टं कनिष्ठानां यन्मानं श्रेष्ठजातिषु।
अल्पत्वे वा महत्त्वे वा सीमासूत्रे विनिश्चिते ॥ १५ ॥
सायते चतुरश्रे वा चतुष्षष्ट्या विभाजिते।
रज्जुवंशसिराषट्कचतुष्काष्टकसन्धिभिः ॥ १६ ॥
वर्मशूलं च यत्नेन वर्जयेद् वास्तुकोविदः।
सूत्रादीनां गृहाङ्गैश्च पीडा चेत् सर्वनाशनम् ॥ १७ ॥
तस्मात् सर्वप्रयत्नेन सूत्रादीनि विवर्जयेत्।
पूर्वादिमध्यसूत्राणि चान्नं धान्यं धनं सुखम् ॥ १८ ॥
इति नामानि तन्नाम्ना चत्वारि स्युर्गृहाणि च।
अन्नालयं धान्यालयं धनालयं सुखालयम् ॥ १९ ॥

कर्तव्यं वास्तुमध्ये तु मण्डपं प्रथमं बुधैः ।
वास्तुव्यासचतुर्भागं मण्डपस्य तु विस्तृतम् ॥ २० ॥
पञ्चषट्सप्तभागाष्टनवभागैकमेव वा ।
सप्तहस्तादि षण्मानं द्विद्विहस्तविवर्धनात् ॥ २१ ॥
आसप्तदशहस्तान्तं श्रेष्ठमध्यकनिष्ठकम् ।
एकभक्त्या द्विभक्त्या वा चतुष्पादाष्टपादकम् । २२ ॥
द्विजभूपतिवैश्यानां युग्मपादं प्रकीर्तितम् ।
शूद्राणामन्यजातीनामयुग्मस्तम्भमिष्यते ॥ २३ ॥
द्विजवन्नृपवैश्यानां वैशिष्ट्यं मध्यवेदिका ।
त्रिकालबलिलब्धा च पुष्पगन्धादिपूजिता ॥ २४ ॥
सा त्रितालसमुत्सेधा चोत्सेधसमविस्तृता ।
तन्मध्ये ब्रह्मपीठं स्याद् वेदिकार्धप्रमाणतः ॥ २५ ॥
षट्षडङ्गुलहीनं स्यात् तन्मानं नृपवैश्ययोः ।
शूद्राद्यन्तरजातीनां न कुर्याद् ब्रह्मवेदिकाम् ॥ २६ ॥
सायते चतुरश्रे च तत्तदाकृति मण्डपम् ।
पञ्चतालं समारभ्य त्र्यङ्गुलविवर्धनात् ॥ २७ ॥
नवधा तलिपायामाः सप्तकायान्तमानकाः ।
पञ्चाङ्गुलं समारभ्य त्रयोदशाङ्गुलान्तकाः ॥ २८ ॥
नवधा पादविष्कम्भास्त्वग्रेऽष्टांशविवर्जिताः ।
पादोच्चार्धमधिष्ठानं षडष्टांशोनमेव वा ॥ २९ ॥
पादोच्चे त्रिचतुर्भागं चतुरश्रं च वृत्तकम् ।
वस्वश्रं चित्रखण्डं च स्तम्भानामाकृतिः स्मृता ॥ ३० ॥

शमीखादिरखदिरस्तम्भाश्च द्विजराजयोः ।
सिलीन्ध्रं पिशितं मधूकं वैश्यस्तम्भाः प्रकीर्तिताः ॥ ३१ ॥
राजादनं च निम्बं च सिलीन्ध्रः पिशितिन्दुका ।
शूद्राणां स्तम्भवृक्षाश्च त्वक्साराः सर्वयोग्यकाः ॥ ३२ ॥
पक्केष्टकाभिः सुधया मण्डपं द्विजभूपयोः ।
वैश्यादीनामपक्काभिर्नानालङ्कारशोभितम् ॥ ३३ ॥
प्रपा वा तत्र कर्तव्या नालिकेरदलच्छदा ।
गृहमण्डपयोर्मध्ये त्रिचतुष्पञ्चषट्कराः ॥ ३४ ॥
एकहस्तं द्विहस्तं वा क्षुद्रे मार्गविशालता ।
सर्वतः समविस्तारं प्रकुर्यादावृतं पथम् ॥ ३५ ॥
अन्नागारादिमध्यं तु वास्तुमध्यात् प्रदक्षिणम् ।
आदित्यनन्दपातालभूताङ्गुलमिति क्रमात् ॥ ३६ ॥
धर्मनन्दाष्टधात्वंशा अन्नाङ्गनादिपातका ॥ ३७ ॥
एकैकाङ्गगतं तत्तत्स्तम्भस्थापनकर्माणि ।
वास्तुमध्यादुदक्पूर्वे दक्षिणापरतः क्रमात् ॥ ३८ ॥
गृहाङ्घ्रिमध्ययोर्मध्यभित्तिर्मध्यमिति स्मृतम् ।
अन्तर्मुखानि गेहानि वास्तुनश्च बहिर्मुखम् ॥ ३९ ॥
महीधरेन्दुभल्लाटमृगादितिपदाश्रितम् ।
सौख्यं महीसुरावासं तत्तारायाममुच्यते ॥ ४० ॥
पञ्चादिनवहस्तान्तं मध्यार्धं च दशार्धकम् ।
सप्तैकादशहस्तं स्यादिति मानत्रयं विदुः ॥ ४१ ॥

चूल्युच्चं सर्वगेहानां गृहान्तं विपुलं भवेत् ।
पादोदयसमा भित्तिः स्वपादत्रिगुणा ततिः ॥ ४२ ॥
गेहतारचतुर्भागपञ्चभागान्तरं क्रमात् ।
पादव्यास इति प्रोक्तं गेहव्यासान्तरात्तु वा ॥ ४३ ॥
यावन्तो विपुले हस्तास्तावदङ्गुलसङ्ख्यया ।
सर्वेषामपि गेहानां स्तम्भविष्कम्भमिष्यते ॥ ४४ ॥
महेन्द्रांशे भवेद् द्वारं मुख्यांशे वारिनिःस्रवम् ।
ब्राह्मणानामिदं सर्वं सम्पदां स्यात् सदास्पदम् ॥ ४५ ॥
महेन्द्रार्कार्य(कः?के) सम्यग् भृशभागे महानसम् ।
त्रिहस्तं पञ्चहस्तं च त्र्यर्धहस्तं षडर्धकम् ॥ ४६ ॥
चतुर्हस्तं सप्तहस्तं चतुरष्टार्धहस्तकम् ।
पञ्चहस्तं नवहस्तं पञ्चमानं महानसे ॥ ४७ ॥
गृहक्षतांशके द्वारं जयन्ते वारिनिःस्रवम् ।
प्राच्यावासं नृपस्योक्तं कोशवाहनवर्धनम् ॥ ४८ ॥
गृहक्षतार्किगन्धर्वभृङ्गराजे विवस्वति ।
धान्यालयं प्रकर्तव्यं तत्तारायाममुच्यते ॥ ४९ ॥
पञ्चहस्तं नवहस्तं षडर्धं च दशार्धकम् ।
सप्तैकादशहस्तं स्यान्नवत्रयोदशहस्तकम् ॥ ५० ॥
एकादशपञ्चदशहस्तं पञ्चप्रमाणकम् ।
पुष्पदन्तपदे द्वारं वितथे वारिनिःस्रवम् ॥ ५१ ॥
विशां दक्षिणवासं स्याद् धनधान्यसुखावहम् ।
पुष्पदन्ते सुरे शोषे वारुणे मित्रके पदे ॥ ५२ ॥

धनालयं धान्यसमं किञ्चिन्न्यूनत्वमिष्यते ।
शूद्रस्य पश्चिमे वासं धनधान्यपशुप्रदम् ॥ ५३ ॥
भल्लाटांशे भवेद् द्वारं सुग्रीवे वारिनिःस्रवम् ।
चतुर्णामपि वर्णानामुक्तं वासविधिक्रमम् ॥ ५४ ॥
स्तम्भस्योपरि कर्तव्यं पोतिकोत्तरवाजनम् ।
तुलाजयन्त्यनुमार्गं फलकां भूमिकल्पनम् ॥ ५५ ॥
कपोतं तत्पदं चैव वितस्तीर्जालकानि च ।
मुष्टिबन्धं मृणाली च दण्डिकां च लुपाक्रियाम् ॥ ५६ ॥
लुपाप्रच्छादनं चैव मुखपट्टिकयान्वितम् ।
गृहस्य दक्षिणे पार्श्वे द्वारं प्रतिमहद् भवेत् ॥ ५७ ॥
द्वित्रिहस्तत्रिहस्तार्धं चतुर्हस्तं च भक्तयः ।
चतुष्पदाद्याद्द्वात्रिंशद्भक्त्या वा वास्तुमण्डपम् ॥ ५८ ॥
एकभक्त्याख्यकत्रिंशद्भक्त्या तालेश्वरप्रपा ।
सपालांशं सविष्टा(?) वा नालितालदलच्छदा ॥ ५९ ॥
गृहाणां गर्भस्थानं तु प्रवक्ष्याम्यनुपूर्वशः ।
देवानां चैव विन्यासे विशेषेण प्रभागतः ॥ ६० ॥
पुष्पदन्ते च भल्लाटे महेन्द्रे च गृहक्षते ।
दक्षिणे नेत्रभित्तौ तु सौम्यादौ तु चतुर्गृहे ॥ ६१ ॥
भित्तिव्यासे नवाष्टांशे बाह्ये तु चतुरंशकम् ।
अन्तस्त्रयांशकं नीत्वा मध्ये गर्भं निधापयेत् ॥ ६२ ॥
स्वामिवासस्य विस्तारे पञ्चषट्सप्तभागिके ।
नीत्वान्तर्भागिकं नेत्रं तस्माद्दक्षिणभागिके ॥ ६३ ॥

स्तम्भमूले विधातव्यं गर्भं गुह्यतरं वरम् ।
द्वारस्य दक्षिणस्तम्भे तद्भित्तौ गूढपादके ॥ ६४ ॥
वस्तुमण्डपमध्यस्य दक्षिणे वाङ्घ्रिमूलके ।
पिण्डभिन्नगृहे गर्भस्थानं पञ्चविधं भवेत् ॥ ६५ ॥
तस्योपरि निधातव्यं मुहूर्तस्तम्भमुत्तमम् ।
विधिज्ञैस्तत्र खदिरं खादिरं च मधूककम् ॥ ६६ ॥
राजादनं यथासंख्यं विस्तारायाममुच्यते ।
भानुरुद्रदशद्वारवितस्त्यायामसंयुताः ॥ ६७ ॥
तत्सङ्ख्याङ्गुलविस्तीर्णाः स्वाग्रेऽष्टांशविवर्जिताः ।
भूतसार्धचतुर्वेदगुणताललनिखातकाः ॥ ६८ ॥
वृत्तकुड्मलखण्डाग्रबुद्बुदाकृतिशीर्षकाः ।
द्विजादीनां चतुर्णां हि स्तम्भाः सम्यक् प्रपूजिताः ॥ ६९ ॥
पिण्डशाला च कर्तव्या त्यक्तमध्यस्थपादका ।
गृहमध्यमभित्तिश्च पादमध्यमवर्जिता ॥ ७० ॥
तामाश्रित्य तु कुल्याभद्वारद्वयमिहेष्यते ।
यत्र चाभ्यन्तरद्वारं पूर्वदक्षिणतो दिशि ॥ ७१ ॥
दक्षिणे गृहपार्श्वे तु गृहपार्श्वे महानसे ।
अभ्यन्तरे तु यद् द्वारं पश्चिमोत्तरतो दिशि ॥ ७२ ॥
उत्तरे गृहपार्श्वे तु पार्श्वे पश्चिमतो गृहे ।
शालासु भिन्नशालासु सन्धिकर्म न कारयेत ॥ ७३ ॥
देवतास्थापनं पिण्डशालासु तु विधीयते ।
नेष्यते बाह्यदेवानां पद्मजस्य निवेशनम् ॥ ७४ ॥

शेषाश्च निष्पदाः सर्वे रक्षणार्थं निवेशिताः।
कदाचित् पिण्डशालाभ्यो मध्यं न प्रविधीयते ॥ ७५ ॥
पार्श्वयोः पृष्ठतः पूर्वे पादानां च समुच्चयम्।
प्रवक्ष्याम्यनुपूर्वेण हस्तसङ्ख्यावशात् पुनः ॥ ७६ ॥
त्रिहस्ते वा त्रिहस्तार्धे स्तम्भा अष्टौ समाहिताः।
चतुर्हस्ते च सार्धे च पञ्चहस्ते च सद्मनि ॥ ७७ ॥
द्विरष्टस्तम्भमुद्दिष्टं षट्षडर्धे च सप्तके।
त्रिरष्टाङ्घ्रय उद्दिष्टाः सार्धाष्टनवहस्तके ॥ ७८ ॥
चतुरष्टाङ्घ्रयः प्रोक्ता दशार्धैकादशेऽपि च।
पञ्चाष्टस्तम्भसङ्ख्याः स्युः सार्धे द्वादशहस्तके ॥ ७९ ॥
त्रयोदशविशाले तु षडष्टैवाङ्घ्रयः स्मृताः।
विस्तारे च तथायामे समाः पादास्तु सङ्ख्यया ॥ ८० ॥
सप्तहस्तं तु विस्तीर्णं षड्भागेन विभाजयेत्।
द्विभागेन मुखेऽलिन्द्रं नवहस्तेऽष्टभागके ॥ ८१ ॥
त्रिभागं पुरतोऽलिन्द्रमेकादशविशालके।
दशभागे चतुर्भागमार्यभागे त्रयोदशे ॥ ८२ ॥
षडंशं पुरतोऽलिन्द्रमेवं भागक्रमं विदुः।
स्वामिस्थानस्य विस्तारं चतुष्पञ्चाशदङ्गुलम् ॥ ८३ ॥
अष्टसप्तत्रिमात्रं हि महत्त्वे तु विधीयते।
षट्षडङ्गुलवृद्ध्या तु पञ्चमानं विधीयते ॥ ८४ ॥
षष्टिभागे कृते स्तम्भे षोडशांशेन वेदिका।
वेदिकाद्विगुणं पादं शेषं प्रस्तरमानकम् ॥ ८५ ॥

पादबन्धमधिष्ठानं पादं सर्वाङ्गसंयुतम् ।
उत्तरोपरि भूतानि कपोतप्रतिसंयुतम् ॥ ८६ ॥
व्यालेभमकरैः सिंहैर्नासिकाद्यैरलङ्कृतम् ।
द्वारतोरणसंयुक्तं विचित्रतरभित्तिकम् ॥ ८७ ॥
स्वामित्रासमिदं वासे कर्तव्यं चात्र मण्डपम् ।
न जातु स्वामिनो वासे वंशानुगतशायनम् ॥ ८८ ॥
स्वामिस्थाने स्थिताः स्तम्भा नेत्रभक्त्या प्रकीर्तिताः ।
एकैकान्तरिताः पादा निरन्तरनिवेशिताः ॥ ८९ ॥
मूलस्तम्भार्धविस्तारा यथेष्टालङ्कृतैर्युताः ।
उपर्युपरि वासानां स्वामिस्थानं विधीयते ॥ ९० ॥
इष्टकासुधया वापि फलकामयभित्तिकम् ।
हेमताम्रादिकं चैव राज्ञां यदि विचित्रकम् ॥ ९१ ॥
अन्नागारादिषु द्वौ द्वौ पाञ्चालादिलुपोच्छ्रयौ ।
लुपाक्रियाक्रमं सर्वं पूर्ववत् परिकल्पयेत् ॥ ९२ ॥
धनक्षयो मन्दवेधे तीव्रे स्याद् ऋणबन्धनम् ।
त्रिचूली वैश्यशूद्राणां पञ्च सप्त महीभृताम् ॥ ९३ ॥
ब्राह्मणानां नवैवं तु एकादशं तु दैविकम् ।
पाषण्ड्याश्रमिणां युग्मसङ्ख्या चूली विधीयते ॥ ९४ ॥
गर्भाधानं चङ्क्रमणं काभित्तिं मुख्यवासकम् ।
शिलास्तम्भं तलं कुड्यं नृणां वासे न कारयेत् ॥ ९५ ॥
तृणाद्यैर्मृन्मयं छाद्यं लोष्टैश्छाद्यममृन्मयम् ।
ब्रह्मस्थानं तलं निम्नं गृहान्तस्थलमिष्यते ॥ ९६ ॥

निम्ने गृहस्थले द्वारं प्रच्छन्नजलभूमिकम् ।
सर्वेषामपि वर्णानां पादोच्चार्धं मसूरकम् ॥ ९७ ॥
केचित् स्वभर्तृवक्षोरुनाभ्युत्सेधं वदन्ति वै ।
अधिष्ठानं च याम्यादिचतुर्गृहविधौ क्रमात् ॥ ९८ ॥
एकस्यैव प्रधानत्वादीदृशेषु गृहेषु वै ।
तस्य कर्तुश्च भोगानां स्थानं तत्रैव कल्पयेत् ॥ ९९ ॥
कश्चिल्लवणयोः पात्रं प्रागुदग्दिशि विन्यसेत् ।
अन्तरिक्षे भवेच्चुल्ली सत्यके स्यादुलूखलम् ॥ १०० ॥
ऐशान्यां पचनस्थानं सर्वेषां देहिनां हितम् ॥ १००½ ॥
वसुभाङ्गुलवैपुलोच्छ्रिताभ्यां नयनेशाक्षकराग्रजप्रवृद्ध्या
सविकाराङ्गुलरत्निकान्तमानं कथितं पञ्चविधं हि चुल्लिभेदम् ॥
चतुरर्काद्यवसानमास्यतारं पुटतारं च तथैव पृष्ठकूटम् ।
समतुङ्गं विपुलं तु चुल्लिकार्धं ह्यधमानामधमादिमानमेव ॥
नरशीर्षकवन्नृपस्य चुल्ली चतुरश्रं द्युसदां महीसुराणाम् ।
चतुरायतकं विशां परेषामितरेषामितरेषु सर्वमिष्टम् ॥
इन्द्वग्निभूतमुनिनन्दकरुद्रसङ्ख्या-
श्चुल्ल्यो नृणाममरधाम्नि समासमाः स्युः ।
सर्वाः सुरावनिसुरावनिपेषु योग्याः
शेषेषु तत्तदुदिताश्च मता यमीन्द्रैः ॥ १०४½ ॥
अन्नप्राशनमार्यांशे चेन्द्राणी च सविन्द्रके ॥ १०५ ॥
श्रवणं तु विवस्वांशे मित्रांशे तु विवाहकम् ।
क्षौरमिन्द्रजये विद्याद् वायौ सोमे च संमतम् ॥ १०६ ॥

व्ययं चोपनयं चैव पितृदौवारिके जले।
सुगले पुष्पदन्ते च प्रसूतिगृहमिष्यते ॥ १०७ ॥
जलकोशमापवत्से कुण्डमापे विधीयते।
अङ्गणं तु महेन्द्रांशे पेषणी च महीधरे ॥ १०८ ॥
वस्तुभेदं प्रवक्ष्यामि पूर्वोक्ते सद्मानि क्रमात्।
दिशाभद्राख्यमादौ तु गरुडपक्षमतः परम् ॥ १०९ ॥
कायभारं तुलानीयमिति वस्तु चतुर्विधम् ।
गेहायामसमं दिक्षु भाद्रकं दिशिभाद्रकम् ॥ ११० ॥
अङ्गणं दिक्षु कर्तव्यं विदिक्षु प्रतिवाटभूः।
शेषं पूर्ववदुद्दिष्टं विशेषाद् द्विजभूपयोः ॥ १११ ॥
वेश्मन्यपि यथा राज्ञां गरुडपक्षविधिक्रमम्।
विस्ताराद्विगुणायाममायामं पञ्चभागिकम् ॥ ११२ ॥
द्विभागं पश्चिमे त्यक्त्वा शेषमष्टाष्टभागिकम्।
मण्डपादीनि सर्वाणि पूर्ववत् परिकल्पयेत् ॥ ११३ ॥
प्रधानं दक्षिणावासं शेषं भोगाधिवासकम् ।
भृङ्गराजाग्निदौवार्ये सुग्रीवे चित्रभागिके ॥ ११४ ॥
अरिष्टाङ्गारिमन्त्यं च तत्रोपस्करभूमिकम्।
वाहनं द्वारवामे च दानशाला च वारुणे ॥ ११५ ॥
असुरे धान्यवासं स्यादायुधं चेन्द्रराजके ।
मित्रावासं तथा मित्रे रोगे लूखलयन्त्रकम् ॥ ११६ ॥
भूधरे कोशगेहं स्यान्नागांशे घृतमौषधम्।
जयन्ते चापवत्से च पर्जन्ये च शिवे क्रमात् ॥ ११७ ॥

विषं च विषसातं च कूपं देवगृहं भवेत्।
सवित्राद्यन्तरिक्षान्तं सव्यञ्जनमहानसम्॥ ११८॥
वितथे पूष्णि साविन्द्रे भक्तगेहं मनोहरम्।
एवमैश्वर्ययुक्तानां वैश्यानां प्रविधीयते॥ ११९॥
विशां यथार्हकं सर्वं त्यक्तपश्चिमभागकम्।
कायभारामिति प्रोक्तं तुलानीयं प्रवक्ष्यते॥ १२०॥
विस्तारद्विगुणायाममायामं सप्तभागकम्।
त्रिभागं वस्तुमध्ये तु चतुष्षष्टिविभाजिते॥ १२१॥
मण्डपादीनि सर्वाणि पूर्ववत् परिकल्पयेत्।
तत्पूर्वापरयोर्द्विद्विभागं त्यक्त्वा प्रयत्नतः॥ १२२॥
पादायामे पञ्चभागे युगांशं द्वारायामं शेषभागं षडंशम्।
त्र्यर्धं द्व्यर्धं चोत्तराधःप्रतिः स्याद् द्वारे बद्धं पूर्ववत् तस्य तारम्॥

तरुणरविमयूखप्रेक्षणादन्नशालं
व्यतिनतमपराह्ने वारुणादश्यजालम्।
धनगृहमतितुङ्गं दुर्निरीक्षं त्रिशङ्को-
रतितरमुरुतुङ्गं दक्षिणागारमिष्टम्॥ १२४॥
मुनिशुभकररश्मिप्रेक्षणादत्र हेतोः
सुरगृहमतिनीचं चाथ कर्तव्यमेव।
द्विजनृपवणिजां वा शूद्रकाणां गृहाणा-
मुदयनतविभागप्रोक्तमायामनैच्ये॥ १२५॥
गृहगतपरमेशं राक्षसे पुष्पदन्ते
शुभकरमथ भल्लाटांशकेंऽशे महेन्द्रे।

धनकुलपशुवृद्धिं शंसते तस्य भर्तु-
गृहगतशुभमानं पादमध्यं च भित्तेः ॥ १२६ ॥

दक्षिणापवरकं गृहेशितुर्वामरङ्गमुदितं तु योषितः ।
तद्विपर्ययमशोभनं तयोश्चित्तदुःखमनिशं ददाति हि ॥१२७॥

मध्यं प्रोक्तं वस्तुगेहाङ्घ्रिकानां भित्तेर्युक्त्या तत्क्रमं सम्पदद्ध्यै ।
तत्तन्मिश्रं सर्वसम्पत्क्षयं स्यात्तस्मात्सम्यक् सम्परीक्ष्यैव कुर्यात्॥

मेषे वृषे चान्नगृहं प्रकुर्यान्मृगेन्द्रके कर्कटके च धान्यम् ।
धनं तुलायामथ वृश्चिके वा सुखालयं वै मकरे च कुम्भे ॥

इति मयमते वस्तुशास्त्रे चतुर्गृहविधानो नाम
सप्तविंशोऽध्यायः ।

---

## अथ अष्टाविंशोऽध्यायः ।

अथ निष्पन्नगृहं प्रविश्य तं त्वरितं न प्रविशेदनिष्ठितम् ।
यदि निष्पन्नमवेशितं चिरं सुरभूतादिगणाश्चरन्त्यलम् ॥ १ ॥

अथ कर्मान्तमुपेत्य तद्गृहं शुभनक्षत्रतिथौ च वारके ।
शुभहोरासुमुहूर्तकोशके करणे लग्नयुते विशेच्छुभम् ॥ २ ॥

पूर्वेद्युर्वासयित्वा द्विजपशुवृषभांस्तर्पयित्वा जलाद्यैः
स्वाध्यायैर्होमशान्तिद्विजवरमुदितैस्तद्गृहं स्वस्तिवाच्यैः ।

पूतं कल्कैर्हरिद्रागरुसरुषपकुष्ठादिकानां वचानां
कुड्ये संलेपितं तैः सह भुवि सलिलैश्चन्दनस्यानुसिक्तम् ॥

पवनस्योत्तरपूर्वभागे त्वधिवासं निशि(मा?चा)रभेत् सुधीः ।
सवितानादि पताकलङ्कनैर्बहुवर्णाम्बरचित्रमण्डपैः ॥ ५ ॥

सितवस्त्रधरः सुवर्णयज्ञः सितपुष्पश्च सितानुलेपनः।
स्थपतिः सुमनाः सुवर्णरत्नैर्विविधैर्निष्ठितभूषणान्वितः॥ ६॥
कलशान् पञ्चकपञ्च वारियुक्तान् नववस्त्रान् मणिहेमसंयुतान्।
मतिमान् शालिगिरौ सतण्डुले ह्युपपीठे तु पदे न्यसेत् ततः॥
बल्यन्नं सितरक्तपीतकृष्णं मुद्गान्नं पयसान्नकं यवान्नम्।
पिष्टान्नं कृसरान्नकं गुलान्नं शुद्धान्नं कलशोत्तरं न्यसेत्॥ ७॥
पर्यङ्कोपरितल्पबन्धने शयने दीपतुरीयसंयुते।
निवसेदम्बरवेष्टिते शुभे स्थपतिः शम्बरमुच्यते सदा॥ ८॥

बलिचरुसकलाश्रं रत्नहेमप्रयुक्तं
दधिगुलमधुपुष्पाज्याक्षताभिस्तु लाजैः।
रजनितगरुकुष्ठानां प्रयोगेऽच्छकल्कै-
र्युतमपि+ तदानां निक्षिपेद्धेमपात्रैः (?)॥ ९॥

भवनविहितदेवान् स्वस्वकोष्ठे निधाय
स्थपतिरमलकुम्भान् हस्तपात्रावलैश्च।
सिततरकुसुमं वै धूपदीपं च गन्धं
दृढतरमतिमद्भिस्त+को धारयित्वा (?)॥ १०॥

प्रणवादिनमोन्तकेन नाम्ना विहितं स्वाम्बरमादरात्सरेभ्यः(?)।
प्रथमं विधिना त्वजाभि नत्वा(?)बलिमात्रं विनिवेदयेत्तु तस्मै॥
स्वायंभुवः स्वस्य चतुर्मुखेषु चतुष्टया(?)नान्दिषु तैतिलानाम्।
यथार्हकैः स्वैर्बलिभिश्च पुष्पकैः सगन्धधूपादिभिरत्र तर्पयेत्॥

इन्द्राय पूर्वदिशि बन्धुभिरग्नयेऽग्नौ
याम्ये यमाय निर्ऋतौ सह बन्धुवर्गैः।

पित्रे प्रतीच्यपि बलिं वरुणाय दद्याद्
वायौ सबन्धुरनिलाय बलिं नयेद्धि ॥ १३ ॥
सोमाय सोमपदके दिशि चोत्तरस्यां
मित्रैः सह स्वबलिमत्र निवेदयेत् तत् ।
पूर्वोत्तरे दिशि शिवाय सबन्धुवर्गै-
रेवं हि दिक्षु च विदिक्षु बलिं विदध्यात् ॥ १४ ॥
ईशे चर(न्त्यै?क्यै)ज्वलने विदार्यै व्यपूर्यतानां पितृबाह्यभागे(?)
एवं पुनर्मारुतबाह्यभागे स्यात् पापराक्षस्यपि भोजनीयाः ॥
स्तम्भे वनाय च दिनाय दिवाचरेभ्यो
दिक्षे(?) च तत्र च विदिक्षु निशाचरेभ्यः ।
उ(र्वी?र्व्यां) क्षिपेद् बलिमघोरगदेवताभ्यो
धर्माय वीर्यविदिवेऽखिलदेवताभ्यः ॥ १६ ॥
द्वारस्य वामपदके मनवे परेभ्यो
दद्युच्छ्रयैः(?) +शयने विधिना बलिं तत् ।
शालासु मण्डपसभास्वथ मालिकायां
मध्येऽङ्गणं तु मुखमण्डपके विमाने ॥ १७ ॥
धान्येष्टकेष्टपदकेऽभ्यमरान्स्थ(म?मां)स्ता-
नाहूय गन्धकुसुमादिभिरर्चयित्वा ।
दत्त्वोदकं सुबलिमत्र निधाय पश्चाद्
देयं जलं स्थपतिना विहितं च धूपम् ॥ १८ ॥
तुलसिसर्ज्जरसार्जुनमञ्जरीघनवचाकपटोलसगुग्गुलुः ।
त्रपुषहिङ्गुमहौषधिसर्षपाः कुरवकोऽत्र सदैव सधूपराट् ॥ १९ ॥
ददति धान्यधनानि बहून्यहो हरति भूतपिशाचसराक्षसान् ।

दहति कूटभुजङ्गममक्षिकान् मशकमूषिकलूतिकलूतकान् ॥
पश्चाच्च पात्रान्तिकपश्चिमांशे धान्यास्तरे तक्षकसाधनानि ।
सर्वाणि विन्यस्य बलिं च दत्त्वा तेभ्यो वदेत् संग्रहमध्यमस्थः ॥
निरुजा मुदिता सधना प्रतिका यशसा महताद्भुतवीर्ययुता ।
सततं निरुपद्रवकर्मयुता पृथिवी पति जीवतु कर्मविधे(?) ॥
धारानिपातात् सलिलप्रकोपाद् दंष्ट्रानिपातात् पवनप्रकोपात् ।
अग्नेश्च दाहान्मुषिताच्च चोराद् रक्षन्त्विदं सद्म शिवं च मेऽस्तु ॥

उक्त्वैवमेवमखिलान्यपि साधनानि
स्थित्वा प्रणम्य शिरसा स्थपतिः कराभ्याम् ।
आदाय तानि सकलानि तदीयबाहौ
सम्यङ् निधाय विधिना स्वजनैः सभृत्यैः ॥ २४ ॥
संग्राह्य बन्धुजनपुत्रसहायकाद्यै
र्गच्छेत्स्वकीयभवनं प्रति तुष्टचेताः ।
संन्यस्य सर्वमततद्बलिशेषमन्नं
सम्यक्क्षिपेत्सलिलके गृहदेवताभ्यः ॥ २५ ॥

अथ सम्यग् गृहमार्जने कृते सितकुष्ठागरुचन्दनाम्बुभिः ।
कलशोदैरपि गन्धसंयुतैर्मणिहेमाम्बुभिरत्र सेचयेत् ॥ २६ ॥
अथ सिद्धार्थकलाजशालिकान् भवनाभ्यन्तरतो विकीर्य++ ।
उपदंशैर्युतमष्टधान्य++धनरत्नं गृहवस्तुवेदय सर्वम् ॥ २७ ॥

गृहपति(ग?गृहि)णी समङ्गलौ च
सुजनसुभृत्यसुतानुजाभिधौ(?) ।
स्वभवनं गृहिवस्तुसमग्रकं
प्रविशताम(वि?नु)चिन्त्य जगत्पतिम् ॥ २८ ॥

प्रीत्या प्रविश्य गृहवस्तु निरीक्ष्य सर्वं
तौ दंपती च शयनेऽप्युपविश्य पश्चात् ।
सव्यञ्जनोदनमथो गृहिणी गृहीत्वा
निर्वर्तयेद् गृहबलिं बलिशेषमन्नम् ॥ २९ ॥

स्वमूलादास्यै स्वकुलानुगां वै(?) गत्वाथ देवद्विजतक्षकादीन् ।
धनैश्च रत्नैः पशुभिश्च धान्यैः सन्तर्प्य वस्त्रादिभिरत्र नित्यम् ॥

स्वजनगुरुजनाद्यैर्मित्रभृत्यादिवर्गै-
रनुगतजनवृन्दैरत्र भोक्तव्यमादौ ।
गृहपतिरपि पत्नी तत्र नत्वा गुरूंस्त-
स्सुतजनमपि पौत्रैर्भोजनीयान् क्रमेण ॥ ३१ ॥

अम्भोभिः पूर्णकुम्भैः सफलकदलिकामञ्जुलैः पूगवृक्षै-
र्दीपैरश्वत्थपत्रैः सिततरकुसुमैः साङ्कुरैः पालिकाभिः ।
कन्याभिर्मङ्गलाभिर्युवतिभिरमलैर्विप्रमुख्यैरुपेतं
द्वारं तत्तोरणाढ्यं गृहमनघतरं वेशयेद् वेश्मनाथम् ॥ ३२ ॥

सितवस्त्रजलप्रदीपपूर्णं सितकुसुमाम्बरधारणं सुहृष्टम् ।
गृहपतिपुरतो यथा विवाहे गृहिणिकरग्रहणं गृहप्रवेशे ॥ ३३ ॥

अदत्तबलिभोजनमदच्छदमगर्भं
द्विजस्थपतिकादिभिरतर्पितमतल्पम् ।
विशत्यपि गृहं यदालमेव हि विशत्यौ (?)
विपत्पदविमेयमतितुष्टहृदयः सः ॥ ३४ ॥

अतिसन्तुष्टमना गृहेश्वरो युतयोषित्स्वजनप्रियानुगः ।
स्वगृहं प्रविशेत् प्रविश्य(वि?चै)वं शुभवाग्भिः परिपूर्णतर्णकः ॥

ग्रामाग्रहारपुरपत्तनकादिकानां
देयो बलिङ्गपटके(?) च विदिक्षु दिक्षु ।
सन्दौ चतुष्कसहिते सुरमन्दिरे च
श्रेष्ठेकजायनिलयेऽखिलदेवताभ्यः(?) ॥ ३६ ॥

इति मयमते वस्तुशास्त्रे गृहप्रवेशो नाम
अष्टाविंशोऽध्यायः ।

---

अथैकोनत्रिंशोऽध्यायः ।

अथ वक्ष्ये राजगृहं संक्षेपाद् बाह्यनगरशिबिरयुतम् ।
त्रिचतुर्भागे नगरे प्राच्यां वाप्युक्तशालायाम् ॥ १ ॥
नरपतिगृहमथ राज्ञा दक्षिणतः पश्चिमांशे तु ।
पूर्णे योधकभवनं स्यात् सप्तनवांशे प्रतीच्यां तु ॥ २ ॥
अङ्कुरादीनां भवनं(शेनासा?सेनेशा)नां हि तत्रैव ।
विश्वनृपैश्वरभवनं मध्येवासं त्रिभागभागेषु ॥ ३ ॥
नगरांशवशान्मानं ह्येतद्दण्डेन (सो? सं)वक्ष्ये ।
सचतुश्चत्वारिंशच्छतदण्डे वेश्मविस्तारम् ॥ ४ ॥
युगवसुभानुविकारैर्दण्डैः क्षपयेत् ततः क्रमशः ।
द्वात्रिंशद्दण्डान्तं वेश्मव्यासं(तो? तथो)क्तानाम् ॥ ५ ॥
तत्तद्वेश्मविशालामूर्ध्वे संवर्धयेत्तु तथा ।
सप्तचतुर्दण्डयुतपञ्चशतज्येष्ठविस्तारम् ॥ ६ ॥
द्वात्रिंशद्दण्डादाद्वात्रिंशन्मानमेवमुद्दिष्टम् ।
ज्येष्ठाज्येष्ठविशालमन्येषामन्यदिष्टं स्यात् ॥ ७ ॥
दैर्घ्यं व्यासद्विगुणं द्विगुणं पादोन(वा? म)र्धकं पादम् ।
द्वादशशालाकारं चतुरं वृत्तं तदायतं शकटम् ॥ ८ ॥

नन्द्यावर्त्तं कौक्कुटमिभकुम्भं स्वस्तिकं चैव ।
गोलापञ्चमृदङ्गमग्निमिति ह्येकमानयुतम् ॥ ९ ॥
इष्टव्यासायामं प्रागेवालं विचिन्त्य कर्तव्यम् ।
तस्माद्धीनं यत्तन्निष्पन्नं वास्तु येन केनापि ॥ १० ॥
अशुभमवनीपतेस्तत् सततं विपदां पदं भवति ।
पौराणां यद्वस्तु वर्धितुमिच्छेद्बहिस्ततस्तस्मात् ॥ ११ ॥
प्रागुत्तरदिशि वृद्धिः शस्ता परितस्तु वा न्याय्या ।
प्रागङ्गणमथ मुख्यं दक्षिणतो वाप्यथाङ्गणं श्रेष्ठम् ॥ १२ ॥
वेश्माभ्यन्तरमध्ये दण्डार्धव्यासतुङ्गपीठं (स्यात) ।
दण्डेन बहिस्तस्मात् पीठेनैवात्र एव सहवेदी ॥ १३ ॥
तद्वेद्या दक्षिणतः पञ्चकषड्ढस्तदण्डकं नीत्वा ।
क्षोणीभृतां प्रतिभवनं वेद्यादपरे तु सूत्रमध्यगतम् ॥
तद्वेद्या उत्तरतस्तावन्मानं विहाय तद्वेद्या ।
प्राक्सूत्रमध्यगतं देव्या धाम्नस्तु तत्र तत्रैव ॥ १५ ॥
त्रिष्षोडशदण्डा वा द्वात्रिंशद्दण्डमानका वापि ।
सचतुर्विंशतिदण्डाः षोडशदण्डं तु वाथवा नीत्वा ॥
नृपतिर्दैर्घ्यायामं बहिः प्राकारत्रिहस्तविस्तारम् ।
एकादशकरतुङ्गं तद्बाह्ये सप्तहस्तमानेन ॥ १७ ॥
परितः पन्थास्तिस्रस्तस्मान्नवदण्डमाया(वल्य?म)म् ।
वेश्मावल्या वृत्तं कूटतति(सेत्व?स्त्व)र्कदण्डमानेन ॥
सार्धदशा(व?द)त्युच्चं तस्मात् पन्था बहिस्तु नवहस्तैः ।
तस्माद् द्विष्षोडशभिर्दण्डैर्मर्यादिरेव भित्तिः स्यात् ॥ १९ ॥

व्यासात् सपाददण्डं पञ्चदशारत्निभिस्तु तत्तुङ्गः ।
भित्तेरभ्यन्तरतः परितो मार्गस्त्रिदण्डेन ॥ २० ॥
द्वादश भवनं दण्डान्यथ रक्षावेशनानि योज्यानि ।
भित्त्याभ्यन्तरतो वा बाह्याद् वा मानयेद्दढतरति(?) ॥
त्रिप्राकारं त्रिपथं त्रिभागयुग्घीननृपभवनयुतम् ।
सचतुर्गोपुरकान्तं मुखगोपुरमुन्नतं हि तत्रैव ॥ २२ ॥
निम्नं पाश्चिमवेशं मुख्यं स्यात् प्राङ्मुखं भवनम् ।
दक्षिणमुखमपि व्यालं नोदक्प्रत्यग्दिशि सुभद्रमुखम् ॥
पञ्चमुखं त्वथ राज्ञां नेष्टं स्याद् वेशनं चयं तस्य ।
राज्ञां श्रीदेवीनामालयकान्तरालयं केचित् ॥ २४ ॥
अथ मध्ये त्वाङ्गणकं शतपादयुता प्रपा वा स्यात् ।
दक्षिणतो राजगृहमभिषेकं स्यात् प्रतीचीतः ॥ २५ ॥
उत्तरदिशि भवनं स्याद् राजमहिष्यास्त्वनेकमेकतलम् ।
पश्चिमदिग्गतभवनं प्राङ्मुखमेवावनीपतेर्मुख्यम् ॥ २६ ॥
परितः परिखा बाह्ये प्राकाराण्येव द्वित्रिदण्डानि ।
नवदण्डविशालान्तं परिखाविपुलं समुद्दिष्टम् ॥ २७ ॥
परिखाया बहिरबहिर्मार्गविशालास्त्रिदण्डेन ।
परिखामूलविशालं स्वव्यासादष्टकेन भागेन ॥ २८ ॥
गाम्भीर्याद् युक्तिवशादाकृत्या चैव पालिकाभासा ।
भवनस्य बहिर्देव्या यानि गृहाण्यत्र तत्र युक्त्या तु ॥
तानि च दैविकभागे सम्यग् वक्ष्येऽहमत्रापि ।
अन्तर्मण्डलबाह्यं तु दैवतांशवशाद् गृहम ॥ ३० ॥

अर्यांशे द्वारहर्म्यं स्याच्चन्द्रे सूर्येऽङ्गणं भृशम् ।
(प्र?भृ)शे व्योम्नि च वृत्तं (स्यात्) पूष्णे हेमं सदक्षिणम् ॥
शालानां वित(धो?थि)राक्षादभूदङ्गणकं विदुः(?) ।
सेनावेशनहर्म्यं तु यमभागेऽतितुङ्गवत् ॥ ३२ ॥
गन्धर्वे नीडभा नृत्तयोग्या रङ्गविभूषिता ।
विमानमन्दिरं वापि शाला वा हर्म्यमेव वा ॥ ३३ ॥
भृङ्गराजेऽश्वशाला (भ्या ? स्याद्) वृषे चार्तवसूतिका ।
पितरि स्थानहर्म्यं स्याद् दौवारिकसुवर्णयोः ॥ ३४ ॥
जललीला विधातव्या पुष्पदन्ते खलूरिका ।
लवणं तत्र विज्ञेयं मरीन्त्राद्यंशतोचितम् ॥ ३५ ॥
वरुणासुरशोषेषु मित्रे स्याच्छङ्करालयम् ।
राजदेवीगृहं गर्भागारदक्षिणवामयोः ॥ ३६ ॥
गेहनृत्तरसाङ्गानि मित्रे सो(मा?प)स्करं गृहम् ।
अन्तर्विवृत्तवेशार्थं रोगादिमुपदापणे(?) ॥ ३७ ॥
वर्तमानादिकं चापि शालानां पादशालकम् ।
नागे सैरन्ध्रिधात्रीणां मुख्ये कन्यागृहं भवेत् ॥ ३८ ॥
भैषज्यं चापि भल्लाटे मृगे सांवाहिकागृहम् ।
रुचकादिचतुश्शालाविमानं वात्र योजितम् ॥ ३९ ॥
अभितो मज्जनागारमुदीच्यामापवत्सयोः ।
पानीयोष्णोदकं धाम यच्च प्रासादवद् बुधैः ॥ ४० ॥
स्वेष्टदैवतमीशाने जयन्ते च विधीयते ।
महेन्द्रे भोजनस्थानं महीधरमरीचयोः ॥ ४१ ॥

सम्बन्धो वात्र कुर्वीत सभापर्वतकूर्मवत् ।
द्वारश्च भित्तयः सर्वाः स्वामिपार्श्ववशा(त्मनः ?न्मताः) ॥
प्रथमावरणे प्रोक्ता द्वितीयावरणे क्रमात् ।
इन्द्रे मातृगृहे छत्रभेर्यादीनां निवासकम् ॥ ४३ ॥
शङ्खकाहलतूर्याणामन्येषां तत्र सम्मतम् ।
सत्ये दानार्चिते शाला भृशे धर्मोदकालयम् ॥ ४४ ॥
पङ्क्तिले ज्वलनांशे तूलूखलं चेन्धनादिकम् ।
पूषाभागे तु सालीन्द्रे वितथे वाजिशालकम् ॥ ४५ ॥
पूर्वस्थाः पश्चिमद्वारा दक्षिण(स्थमु ? स्था उ)दङ्मुखाः ।
पश्चिमस्थाः पूर्वमुखा उदक्स्था दक्षिणाननाः ॥ ४६ ॥
सर्वे गृहस्य मार्गेणान्तरिताः सद्मसम्मुखाः ।
राक्षसे शस्त्रशाला स्याद् द्वारशालाथ वामके ॥ ४७ ॥
व्यालकामीन्द्रकाजालिप्रभृतीनां मृली (?) भवेत् ।
धर्मराजेऽन्नपानादिकर्मणामालयं भवेत् ॥ ४८ ॥
मध्यरङ्गसमायुक्तां चतुश्शालां समालिखेत् ।
सेनापतेः प्रशस्ते स्याद् गन्धर्वांशे (ज्वला?जया)त्वहम् ॥
भृङ्गराजसमान्या वाजिता वा शालका मता ।
व्यालकामीन्द्रकाजालिप्रकृतीनां मृषा भवेत् ॥ ५० ॥
निर्ऋतौ माहिषं गेहं दौवारिकसुवर्णयोः ।
दानशालेक्षणाशालास्नानपीठादिके गृहे ॥ ५१ ॥
नागे रुद्रांशके चैव सायतादिपुका भवेत् ।
कन्यकानां च धात्रीणां मुख्याभागे विमानकम् ॥ ५२ ॥

कञ्चुकीनां च माद्रूनामन्यत् सामान्यतो बुधैः (?) ।
भल्लाटे सोममार्गांशे तृणादीनां निवासके ॥ ५३ ॥
कुब्जिनीवामनीकन्याषण्डकीनां तथादितौ ।
धात्रीणामुदितौ गेहमीशे पर्जन्यके पदे ॥ ५४ ॥
आ(पश्चै?पे चै)वापवत्से च वापी कूपं च दीर्घिका ।
पानीयसदनं पुष्पोद्यानं तत्रैव कीर्तितम् ॥ ५५ ॥
जयन्ते दक्षिणे शाला दानशाला सुरेन्द्रके ।
धाम्नस्त्वभिमुखा सर्वा शाला प्राग्दक्षिणान्विता ॥ ५६ ॥
इन्द्रे शास्त्रं रवौ गानं स(र्धे?त्ये) चाध्ययनं भृशम्
महामहानसं व्योम्नि गौर्वत्सा पूष्णि पावके ॥ ५७ ॥
वितथे लवणं चैव बल्लूरस्थायुचर्मणाम् ।
राक्षसे नागवासं च चित्रशिल्पादिसौधकम् ॥ ५८ ॥
धर्मांशे दण्डकावासं शूर्पं वा लाङ्गलं तु वा ।
गन्धर्वे भृङ्गराजे च रसादीनां निवासकम् ॥ ५९ ॥
मुष्टे दार्हन्तु(?) पित्रंशे दानं दौवारिके मतम् ।
सुग्रीवे मल्लधामं स्यात् पुष्प(गे ? के) युगकोष्ठकम् ॥ ६० ॥
वारुणे युवराजस्य शाला वा (मा)लिका भवेत् ।
हयेभसदनं चैव पुरोहितगृहं तथा ॥ ६१ ॥
असुरे चेन्द्रशाला स्याच्छोषे शरभकालयम् ।
खरोष्ट्रायतनं रोगे भैषज्यं च प्रकल्पयेत ॥ ६२ ॥
वायौ वापि भवेद् गोत्रनागे पुष्करणी च वा ।
मुख्यभल्लाटयोर्हस्तिवाजिशाला विधीयते ॥ ६३ ॥

सोमे प्रसूतिका चोपनीतिका च प्रवक्ष्यते ।
ऋभादीन्युदिताशाले जयन्तीदीर्घिकादिका ॥ ६४ ॥
विहारारामभूमिः स्यात् तत्र साङ्गणका सभा ।
द्वितीयावरणे प्रोक्ता सर्वेषा(भ्या?म)न्तरा(न)ना ॥ ६५ ॥
वेश्मनां पुरतः पार्श्वे शेषराजबलावलम् ।
तद्बाह्ये वणिजादीनां वासपङ्क्तिस्तु युक्तितः ॥ ६६ ॥
अपरे दीर्घिकायामं वापीकूपादिकं क्रमात् ।
तत्रैवान्तःपुरं मूलं भृत्यानां वासपङ्क्तिकम् ॥ ६७ ॥
सर्वत्र दीर्घिकारामवापीकूपसमान्वितम् ।
नानाजातिसमाकीर्णं नानास्त्रीजनसंयुतम् ॥ ६८ ॥
नानाशिल्पसमोपेतं षड्बलैः परिपूरितम् ।
प्रागुदक्प्रागवाक्कोणे शाला हस्त्यश्ववासका ॥ ६९ ॥
नानावर्णसमोपेता नानापणिकयान्विता ।
सर्ववर्णयथाराजास्वस्यनाम्नाभिधानका(?) ॥ ७० ॥
नगरावृतसालः स्याद् विशालः स्याद् द्विदण्डकम् ।
कथ्यते पञ्चषट्सप्तहस्तैर्वा विस्तरं क्रमात् ॥ ७१ ॥
व्यासद्वित्रिगुणोत्सेधं बहिर्वास्तुचयान्वितम् ।
अभीप्सित+तुर्वात्रपरिपावप्रयोमतम्(?) ॥ ७२ ॥
तद्बहिः शिल्पिकोपेतं सर्वत्रै(व) समन्वितम् ।
सर्वेषां संप्रशस्तं स्याज्जहाल्पे च गोपुरम् ॥ ७३ ॥
स्वाम्यावाससमं बाह्यगोपुरं प्रविधीयते ।
अल्पत्वे स्वामिवासस्य तलादेकोनमिष्यते ॥ ७४ ॥

नन्दरुद्रतले मूले सप्तभूद्वारगोपुरम् ।
एकैकतलसंख्याभिर्हीनमभ्यन्तरे क्रमात् ॥ ७५ ॥
विशेषेण नरेन्द्रेण नरेन्द्रद्वारमुत्तमम् ।
राक्षसांशेऽथवा मुख्या द्वारपञ्चत्रिभूमिकम् ॥ ७६ ॥
पुष्पदन्ते च भल्लाटे द्वारं नीचतलान्वितम् ।
सुग्रीवांशेऽथवा मुख्ये जयन्ते वितथेऽपिच ॥ ७७ ॥
पक्षद्वारं प्रकर्तव्यमेकद्वितलसंयुतम् ।
अष्टसालं बहिःसालं सच्छिद्रं च सचक्रकम् ॥ ७८ ॥
विशेषेण नरेन्द्राणामिन्द्रभागे तु मन्दिरम् ।
ब्रह्मांशमाश्रितं वेश्म सर्वसम्पत्सुखावहम् ॥ ७९ ॥
सकलक्षितिपेन्द्राणामेकादशतलं भवेत् ।
नवभूमिर्द्विजा(राज्ञां?तीनां) नृपाणां सप्तभूमकम् ॥ ८० ॥
षट्तलं मण्डलीकुड्य पञ्चभूमावराजते ।
वैश्यानां तु चतुर्भौमं योधसेनेशयोरपि ॥ ८१ ॥
एकादित्रितलान्तं च शूद्राणां प्रविधीयते ।
सामन्तप्रमुखादीनां कारयेत् पञ्चभूमकम् ॥ ८२ ॥
युग्मं वायुग्मभूमं वा सर्वभूपेन्द्रमन्दिरम् ।
राज्ञां स्त्रीणां च देवीनां युग्मं वायुग्ममेव वा ॥ ८३ ॥
सदण्डिकं लुपारोहि द्विनेत्रं प्रस्तरान्वितम् ।
मृण्मयं तु तृणाच्छाद्यमेकद्वितलसंयुतम् ॥ ८४ ॥
स्तूपिवर्णलुपाहीनं प्रशस्तं सर्वजातिषु ।

मिश्रितान्तरवर्णानां संपदैश्वर्यभोगिनाम् ॥ ८५ ॥
रुचकादिनिवासांश्च युक्त्या तत्र प्रयोजयेत्।
अनुक्तं सर्वमत्रैव युक्त्या तद् योजयेत् सुधीः ॥ ८६ ॥
सामान्येनोदिता राज्ञां राजधानी तु पण्डितैः।
विशेषेण नरेन्द्राणां वक्ष्ये वेश्म सनातनम् ॥ ८७ ॥
प्राकारो विपुलो दण्डपरिखा द्वित्रिदण्डकैः।
वृत्तमार्गश्चतुर्दण्डैर्विंशद्दण्डैर्गृहावलिः ॥ ८८ ॥
वेश्यालीलावृतो मार्गस्त्रिचतुर्दण्डमानतः।
वप्रमार्गस्त्रिदण्डं स्यात् प्राकारं पञ्चहस्तकम् ॥ ८९ ॥
तस्यापि परिघा प्रोक्ता चतुर्दण्डैकविस्तृता।
परिघापरितो मार्गाश्चाष्टयष्टिविशालकाः ॥ ९० ॥
ततोऽष्टचत्वारिंशद्भिर्विश्वापालिरधावृता।
तद्बहिः परितो मार्गाः षट्सप्ततनुरादिकम् ॥ ९१ ॥
चतुर्दण्डं ततो विप्रप्राकारं सप्तहस्तकम्।
दण्डेनैकेन विधृतं नागपूरितबन्धनम् ॥ ९२ ॥
अष्टदण्डादिसूर्यान्तं परिघाविपुलं भवेत्।
बाह्याभ्यन्तरमार्गं तु प्राकारविपुलं तथा ॥ ९३ ॥
तद्बहिर्दशदण्डेन सीमा सर्वजनालया।
प्राकारं वा सवासं च परिघाश्च समीरिताः ॥ ९४ ॥
वप्रः प्राकारमित्येवं वास्तुविद्भिः प्रशंसितम्।
पञ्चावरणकं शस्तावरुणा द्विचतुष्टयैः ॥ ९५ ॥
अन्तःपरिवृतं युक्तियुक्तीतीक्ष्येनिवेशयेत्(?)।

आत्तविशालायामे पञ्चांशेंऽशं मुखेऽमुखे नीत्वा ॥ ९६ ॥
शेषे षण्णवभागे त्रिंशतिपञ्चांशब्रह्मवस्तु स्यात् ।
तस्मिन् शतपादयुतं मण्डपमन्तस्तु वेदिकापीठम् ॥९७॥
अन्तरसंयुतयत्तत्प्रासादो वा प्रवाततः परितः ।
पन्थाभागस्तेन समा दशखल्लूरिका परितः(?) ॥ ९८ ॥
द्वारचतुष्टययुक्ता सौष्ठिककोष्ठान्विता तथा शुभदा ।
युक्त्यासनमिदमुदितं तन्मुखदेवांशके तु नवके वा ॥
प्रासादादिष्टांशे दक्षिणतो राजकत्वे वा ।
उत्तरादिश्यपि दिष्टं ज्येष्ठयुवत्यालयं तु ततः ॥ १०० ॥
आर्यपदे(ह्वि ? नि)हितं तद्वारकहर्म्यप्रतीच्यवितनम्(?) ।
शाला वा ह्यभिषेका सर्वविचित्रान्विता सभा तत्र ॥१०१॥
कर्णचतुष्टयकेऽन्त(र्वृद्ध ? द्दे)ढपदयुक्ता सभा खल्लूरियुता ।
प्रागुत्तरादिशि सलिलं स्नानं देवालयं तु होमाग्रम् ॥
सेनालोकनहर्म्यं कूटं वा प्रागवाग्दिशि यत्तत् ।
पश्चिमदक्षिणकोणे नृत्तकवाद्यादिलीलया च सभा ॥
उत्तरपश्चिमकोणे वासं स्याद् गीतकादिवनितानाम् ।
प्राच्यां दिश्यङ्गणकं दुर्गाया मेरुगोपुरकम् ॥ १०४ ॥
प्रागुत्तरदिशि सलिलं तत्क्रीडाङ्गणं च सभा तत्र ।
ग्रासनपानायतनं कुर्यात् स(म्यक् तु) लक्षणाभियुतम् ॥
तत्प्राग्दक्षिणकोणे मध्याङ्गणकान्विता सभा तत्र ।
रत्नाष्टापदवस्त्रप्रभृतीनां वासमिष्टं स्यात् ॥ १०६ ॥
तत्परदक्षिणकोणे मध्याङ्गणकादिसंयुता च सभा ।

तद्बहिरावृतभागे यत्र स्वभवनानि तत्र वनितानाम् ॥
अपरे चारामयुतं वासक्रीडान्वितं तु तत् सजलम् ।
प्रत्यगुदग्दिशि कोणे सर्वस्त्रीणान्विता(?) सभावासम् ॥
अत्रानुक्तं सर्वं पूर्ववदिष्टं बहिस्त्वयस्त्वबहिः(?) ।
एतत् पद्मकमुदितं राज्ञामावासकं मुनिभिः ॥ १०९ ॥
गृहीतविपुलायामे स्थानीयांशे तु मध्यमम् ।
सकले ब्रह्मणः पीठं वेदिकान्तं तु मण्टपम् ॥ ११० ॥
दक्षिणे चोत्तरे चैव राजदेवीगृहं भवेत् ।
पश्चिमे नृपतीशस्य मन्दिरं बहुभूमिकम् ॥ १११ ॥
प्राच्यां दिश्यङ्गणं मध्ये द्वारशोभादिमण्डितम् ।
द्वारस्य पश्चिमे प्राच्यादभिषेकालयं भवेत् ॥ ११२ ॥
एतत्पीठपदे न्यासं तस्मिन् सालं तु पूर्ववत् ।
उपपीठपदे तस्माद् बाह्ये पूर्वादिषु क्रमात् ॥ ११३ ॥
जयन्ते जानुभागे च भृशभागेऽङ्गणं भवेत् ।
तन्मध्ये द्वारहर्म्यं स्यात् त्रितलादितलान्वितम् ॥ ११४ ॥
अन्नं महानसे कुर्याद् द्वितले मूलकोजकम् ।
तस्मिन् पादांशमाश्रित्य द्वारप्रासादयोगिकम् ॥ ११५ ॥
यमे भृङ्गे नृपे चैव पित्रंशे योषितां गृहम् ।
शुभगे नृत्तशाला स्याद् वारुणे नृपमन्दिरम् ॥ ११६ ॥
शोषे चान्तःपुरं वायौ वापीक्रीडासमन्वितम् ।
मुख्ये वासं महिष्यास्तु शाला वा मालिका भवेत् ॥
सोमभागे तुलाभारं हेमगर्भं तु तत्परे ।

दित्यंशे हेमरत्नानि गन्धागारमिहोच्यते ॥ ११८ ॥
तत्रैव हस्तिशाला स्यादीशे वापी च कूपकम्।
वचोगेहं(?) तु तत्रैव जलयन्त्रं विधीयते ॥ ११९ ॥
तत्र तालं च मार्गं च पूर्ववत् परिकल्पयेत्।
स्थण्डिलं तद्बहिर्भागे पर्जन्यांशे महेन्द्रके ॥ १२० ॥
भानुसत्यान्तरिक्षा वै वाङ्गणं कारयेत् सुधीः।
महेन्द्रांशे भवेद् द्वारं चतुष्पञ्चतलान्वितम् ॥ १२१ ॥
तत्रैव शङ्खभेर्यादितौर्यशब्दादिचित्रकम्।
अनुक्तं पूर्ववत् सर्वं परितः प्रविधीयते ॥ १२२ ॥
परमशायिबाह्ये तत् तत्प्राच्यामङ्गणं भवेत्।
जयन्ताद्यन्तरिक्षान्तमङ्गणं कारयेद् भृशम् ॥ १२३ ॥
अनुक्तं पूर्ववत् सर्वं श्यानांशादिक्रमेण च।
स्थानीये तद्बहिर्भागे प्राच्यां दिश्यङ्गणं भवेत् ॥ १२४ ॥
अङ्गणस्य तु विस्तारं दैर्घ्यंद्विस्सप्तभागिकम्।
द्वारगोपुरसंयुक्तं दुर्गाधामसमन्वितम् ॥ १२५ ॥
महामहानसं तस्य प्राग्दक्षिणगतं भवेत्।
तत्र कर्मान्तवत्सानां लेखनानां तु कर्मिणाम् ॥
दक्षिणे चाष्टभागे तु नैवाङ्गणमहान्तरम्।
अश्वलीलार्थकं वाथ गजलीलार्थकं तु तत् ॥ १२७ ॥
तत्रैव तुङ्गकूटं स्यान्निर्ऋतौ नृपमन्दिरम्।
खर्लूरिं तद्बहिर्भागे तद्बाह्ये योषितां गृहम् ॥ १२८ ॥
वरुणे नृपवा(मं ? सं)स्याद् योषितां सङ्करालयम्।

जलक्रीडा सभा वाथ मालिका वासमन्दिरम् ॥ १२९ ॥
वायुभागे तु वापी स्याद् विहाराश्रमभूमिकम् ।
सोमभागे तुलाभारं हेमगर्भं तु तत्परे ॥ १३० ॥
ईशदेशे शिवा सर्वं युक्त्या तत्र प्रयोजयेत् ।
तद्बहिर्नगरं वाथ शिबिकं पूर्ववत् क्रमात् ॥ १३१ ॥
एतत्सौबलमित्युक्तं नाम्ना राजेन्द्रमन्दिरम् ।
अथ राज्ञां प्रतिभवनं वक्ष्ये वै(शे ?)केन संक्षिप्य ॥ १३२ ॥
आत्तविशालायामे तत्रोभयचण्डिते तु मध्य(प?ग)ते ।
ब्रह्मासनमथवास्मिन्नभिषेकार्हसभासु मण्टपकम् ॥
तदपरभागे भवनं तेन सहैवैषुसप्तनवतलकम् ।
पृष्ठे तद्द्विकपार्श्वे चाङ्गणयुक्ता खलूरिकांशेन ॥ ॥ १३४ ॥
भोजनभोज्यालयका नृपतेर्वाञ्छावशादबहिः ।
तत्प्रागुत्तरकोणे मज्जनशाला च देवगृहम् ॥ १३५ ॥
पुरतोऽङ्गणमुरुविपुलायामोपेतं नवांशेन ।
प्रागिव तत्र खलूरी कर्तव्या मध्यदेशयुता ॥ १३६ ॥
द्वारं द्वित्रितलाढ्यं तस्मिन् भेरी निधातव्या ।
मण्डपमुखमिह भवनं पार्श्वे पोतस्य पार्श्वकर्तव्या ॥ १३७ ॥
................यद्यद्द्वारे प्रयोगिके नृपतेः ।
त्रिद्विकपार्श्वेऽङ्गणके गोलादीनां हि द्वारस्था ॥ १३८ ॥
प्रागुत्तरदिशि कोणे भवनं स्यान्मूलकोशगृहम् ।
तदपरभागे वस्त्रप्रभृतीनामालयस्थलं कुर्यात् ॥ १३९ ॥
द्वारस्योत्तरपार्श्वे पानीयोष्णोदकालयं कुर्यात् ।

(कुर्याद्) वचनालयकं सर्वद्रव्यालयं तु तत्रैव ॥ १४० ॥
द्वारस्य दक्षिणदिशि (त)त्रादिवासकं कुर्यात् ।
तद्दक्षिणदिशि गन्धप्रभृतीनामालयं कुर्यात् ॥ १४१ ॥
प्राग्दक्षिणतटकोणे भवनं स्यान्मूलकोशगृहम् ।
राक्षसभागे तत् (तु?)तत्पश्चिमभागे द्विपेन्द्रमन्दिरकम् ॥
तत्परदाक्षिणकोणे शैवस्थानं सरत्नहेमगृहम् ।
तत्प्रत्यगुदक्कोणे दानाध्ययनार्थकालयं कुर्यात् ॥ १४३ ॥
प्रायःप्रयोगद्वारं....शते तु नीचं तत् ।
द्वारस्यो(द ? भ)यपार्श्वे सारद्रव्यालयं तु कूटगृहम् १४४
तत्रैव हस्तिशाला सर्वौषधिशस्त्रशाला स्यात् ।
अन्यत्सर्वं नृपते(रिच्छावशतः) प्रकर्तव्यम् ॥ १४५ ॥

अथ नृपेशगृहं च मुखाङ्गणं परियुतं हि भवेन्मुखमण्डपम् ।
अपिच भोगगृहं तु निवारणं नृपतिवाञ्छतिगृहा ++++(?) ॥
तद्दक्षिणतः पार्श्वे द्विष्पट्पदके महाङ्गणं (दीह्यव?दिव्यम्)।
तस्मिन् पश्चिमभागे मण्डपमथ मालिका वाथ ॥ १४७ ॥
शाला तदुभ (वप?यपार्श्वे) अभितः स्नानं च म(ण्डपं च)स्यात्।
अङ्गणकदक्षिणके सर्वद्रव्यालयान्तमेव स्यात् ॥
वेशनपरिकामीन्द्रकात्कूटशालाविचित्रितं पुरतः(?) ॥ १४८? ॥
पुरतो भवनाङ्गणयोरद्विकपार्श्वभागतः परितः (?) ।
अपरो स्त्रीवासावासाङ्गणकं मालिकाभिधापङ्क्तिः ॥ १४९? ॥
भवनस्योत्तरपार्श्वे तत्र महिष्यालयं तु तत्तुङ्गः ।
भागं तत्रिकपार्श्वे राज्ञां स्त्रीणां च मा(ग्रह?लिका)पङ्क्तिः ॥

तत्रैव कन्यकानां वासं वसुधात्र कुब्जकादीनाम्।
एकद्वित्रिभिरंशैर्दक्षिणतश्चोत्तरक्रमशः ॥ १५१½ ॥
तत्रोद्यानविशालं सालं कुर्यात् तु तत्र बहिरेव।
तत्रैवोत्तरभागे यत्र युता सम्मता जलक्रीडा ॥ १५२½ ॥
तत्र च सलिलावासं(स्याद्) नृपतेर्दीर्घिका चैव।
अपरे नृपतेश्च गृहं स्त्रीणां स्यादेव सङ्करा शाला ॥
प्रागुत्तरदिशि बाह्ये नव स्वेष्टदेवताश्च गृहम्।
तत्राग्रायणशाला पुष्पोद्याना(दी?)नि (च?) कूपं स्यात् ॥
प्राच्यां तु महाङ्गणकं त्रिंशद्भागैर्विधातव्यम्।
समहेन्द्रद्वारं तत् त्रितलं वा गोपुरं चतुःस्थलकम् ॥
....जासरस्वतीसद्मान्ताल्येतानि द्वारदक्षिणतः।
अभ्यन्तरमुखयुक्तान्येद्वितयत्रेखभैमानि(?) ॥ १५६½ ॥
तत्प्राचि शङ्खभेरिप्रभृतीनामालयं तु स्यात्।
तद्दक्षिणतो दभ्रं महानसं सर्वरक्षयुतम् ॥ १५७½ ॥
अङ्गणदक्षिणभागे द्वारं स्यादेव द्वित्रितलसहितम्।
द्वारस्योभयपार्श्वे लेखकयोस्तत खलूरी स्यात् ॥ १५८½ ॥
अङ्गणकोत्तरपार्श्वे कर्तव्या चैव (द्वनृकाच?) सभा।
दक्षिणमुखगतसहिता सर्वविचित्रा मनोहरा तुङ्गा ॥
तदपरभागेपू....शस्तानन्तु गीतकादिसहाः(?)।
अन्यत्सर्वं नृपतेरिच्छावशतः प्रकर्तव्यम् ॥ १६०½ ॥
वेश्मावधूविहिततुङ्गविशालमूलं
(स्या?सा)लं शिलाभिरथ चेष्टकया (प्रयोज्यम्)।

तद्बाह्यतः परिघयान्वितमिष्टकाद्यै-
र्युक्तं+++मिति वेश्मवरं हि नाम्ना ॥ १६१३ ॥

आवाहनोद्वाहनतोयकर्दमै-
र्झषैर्जलूकाभिरनेकसर्पकैः ।
पद्मारिभूकण्टकमत्स्यकच्छपैः
(कुली)रशङ्खैः परिघा समन्विता ॥ १६२३ ॥

वासाग्निनालम्बनकुड्यसंयुता
जलैर्लताभिः परिपूर्णपत्रिका ।
अभ्यन्तरप्रार्थनतोन्नतान्विता
चित्रान्विताभि(त्तिर)नेकयन्त्रकम् ॥ १६३३ ॥

एवं दुर्गे राजवे (श्मन्य ? श्मानि) कुर्याद्
बाह्येऽबाह्येऽभ्यन्तरे तत्क्रमेण ।
सर्वे रक्षा भूपतीनां जनानां
तस्मात् त (स्या ? स्मा) द् बाह्यतः षड्बलं तत् ॥

स्थानीयमाहुतं वे(व?)परमं यात्रामणिस्तथा विजयः ।
नगरं चतुर्विधं हि प्रोक्तं तज्ज्ञैर्नरेन्द्राणाम् ॥ १६५३ ॥

तत्कुलमूलनृपेशैर्जनपदमध्येऽग्रंस्थितस्थानम् ।
सतृणजलोर्वीगर्भं नगरं स्थानीयमिति कथितम् ॥ १६६३ ॥

प्रभुमन्त्रोत्साहा(ख्यै)र्युक्तं शक्तित्रयवरावनिपैः ।
तृणभूजलगर्भयुतं नद्यावारह्ययुक्तं च(?) ॥ १६७३ ॥

नन्यान्नजजातुरलच्छागम्मत्युच्यते परैर्नगरम् (?) ।
आरभ्यापकयुक्तं सतृणं संग्रामयात्रके विहितम् ॥ १६८३ ॥

संग्रामं तदभीष्टं विजयं युक्त्याणितयद्गर्भम् (?)।
गर्भत्रयैरुपेतं विजयमिति प्रोच्यते प्राज्ञैः ॥ १६९३ ॥

महति वेश्म(नि) वान्वितकार्मुकैर्भवनमत्र विगृह्य ततः परम् ॥
परिवृतं सकलं हि यथापुरा भवति शेषमशेषबला(र्ध?र्थद)म् ॥

त्रिहस्ताद्य (ण्ड?ष्ट) हस्तादिवृद्धया पञ्चान्तरङ्गिका।
पञ्चैव भक्तयस्ताभिर्हस्तिशाला विधीयते ॥ १७१३ ॥

षण्णवेति चतुस्सप्तत्रिपञ्चैरिति कीर्तिताः।
भक्तयस्त्रिविधा शाला विस्तारायामतः क्रमात् ॥ १७२३ ॥

अल्पत्वे तु महत्त्वे तु यथा योग्यं तथाचरेत्।
मुखशालैश्च भक्त्या तु मध्ये विस्तारनिर्गता ॥ १७३३ ॥

शयनस्थानकं भक्त्या दक्षिणे प्रविधीयते।
राजादनो मधूकश्च खदिरः खादिरस्तथा ॥ १७४३ ॥

तिन्त्रिणी चार्जुनी चैव स्तम्बकं पिशितः शमी।
क्षीरिणी पद्मकाद्यास्ते शालास्तम्भा गतास्य च(?) ॥ १७५३ ॥

सप्ताष्टनवहस्तोच्चमवगाहादुप+या।
विस्तारस्तु विशात्वास्यादवगाहो यथाबलम् (?) ॥ १७६३ ॥

शालास्तम्भा इमे प्रोक्ता विटपाभशिखान्वितम्।
सुवृत्ते हस्तिनः स्तम्भस्त्वेकहस्तविशालतः ॥ १७७३ ॥

त्रिपा(द्यो?दो)च्चार्धहस्तो वा विस्तारं त्रिविधं स्मृतम्।
चन्द्रभागेऽष्टभागेन हीनाग्रस्तारकान्वितम् ॥ १७८३ ॥

शालाव्यासे तु पञ्चांशं नीत्वा पृष्ठे त्रियंशकम्।
आपादं षोडशांशे तु वामेऽष्टांशान्यपोहतम् ॥ १७९३ ॥

स्थापयेत्तु तदालानान् पूर्वोक्तांश्च समान्वितम् ।
अनुपादार्धमानेन भित्त्युत्सेधो विधीयते ॥ १८०३ ॥
तदूर्ध्वे कटकच्छाद्यं घाटनोद्घाटनक्षमम् ।
वितस्तिर्गोस्तनं पश्चात् स्थापयेद् बहिराननम् ॥ १८१३ ॥
कारयेद्धस्तमानेन फलकाप्रस्तरं तलम् ।
शिलाभिर्वेष्टकाभिर्वा प्रस्तरं नैव कारयेत् ॥ १८२३ ॥
मूत्रद्वारयुतं लब्धद्वारयुक्त्या क्रमान्वितम् ।
अन्यत्सर्वं यथायुक्ति तथा कुर्याद् विचक्षणः ॥ १८३३ ॥
नवाष्टसप्तषट्पञ्चहस्ते पञ्चविसारिणि ।
त्र्यभक्त्याद्येकविंशद्भक्त्यान्तायाममीरितम् ॥ १८४३ ॥
चतुर्मुखचतुश्शाला सप्रग्रीवाश्च सालकाः ।
दशद्वादशहस्तैर्वा स्तम्भव्यासं प्रकीर्तितम् ॥ १८५३ ॥
त्रिचतुःपञ्चषड्ढस्तैः कुड्योत्सेधं विधीयते ।
अभिन्नानां तु भिन्नानां भित्तिबन्धं यथेष्टतः ॥ १८६३ ॥
नेत्रभित्तौ च पृष्ठे च जालकं स्याद् गृहे गृहे ।
गृहान्ते कर्णधारा स्या(त्त?)त्तददर्भा वयोचिताः(?)
अयुग्मवंशविस्तीर्णाः फलकैः प्रस्तरं तलम् ।
मूत्रच्छिद्रसमायुक्तं सारदारुमयैर्दृढम् ॥ १८८३ ॥
प्रत्येकं तुरगस्थानमेकभित्तिस्ववेशनम् ।
सारदारुमयं कीलं द्विसप्ताङ्गुलदैर्घ्यकम् ॥ १८९३ ॥
द्वित्र्यङ्गुलं तु विस्तारं सूचिकाग्रसमान्वितम् ।
पश्चाद् बन्धोऽग्रबन्धे तु योजयेद् दृढखातवत् ॥ १९०३ ॥

मयूरवानरादीनामालयं शुकपञ्जरम्।
चित्रं गोयुग्मगोवत्सपानधान्यधनालयम् ॥ १९१½ ॥
वस्त्ररत्नायुधद्यूतकर्मान्तावरणालयम्।
दानभोजनशाला च यागशाला सदक्षिणा ॥ १९२½ ॥
दक्षिणं पञ्जरावासं यथास्थानं प्रयोजयेत्।
उद्याने चापि वास्थाने स्थानमण्डपमिष्यते ॥ १९३½ ॥
कूटागारं तु वा वृत्तशालायां वृषभस्य तु ॥ १९४ ॥

उत्तुङ्गकुड्या नृपमन्त्रशाला
पूर्वापरव्यामयुता मनोज्ञा।
सभा च वा चावृतकुड्यहीना-
तिदूरतः प्रेक्षणकर्मयोग्या ॥ १९५ ॥

कूटाकारं तु वा तस्मिंस्ततः पश्चिमतो दिशि।
राज्ञां सिंहासनं युक्त्या प्राङ्मुखं कल्पिते यथा॥१९६॥
तत्पूर्वदक्षिणे भागे मन्त्रिणां चासनं भवेत्।
दूतस्य प्रागुदग्भागे प्रशस्तासनमुत्तरे ॥ १९७ ॥
सेनापतेस्तद्दक्षिण्ये सर्वं नालिसमान्तरम्।
पञ्चान्देकाङ्गलीकामनोज्ञामन्त्रनलिनका(?) ॥ १९८ ॥
मन्त्रेणैकेन सुषिरा मुकुलाग्रद्वयान्विता।
व्यासायामे तु पञ्चांशषडंशैकांशद्व्यंशकैः ॥ १९९ ॥
मध्येङ्गणं तदावृत्तं स्तनमात्रोच्चभित्तिकम्।
वृत्तोपलं तु तन्मध्ये प्रागुदग्जलपात्रकम् ॥ २०० ॥
केशक्षालनपर्यङ्कं तद्दक्षिणगतं भवेत्।

प्रागुदग्द्वारसंयुक्ता तथा मण्डपमालिका ॥ २०१ ॥
प्रासाधिकासनं मित्रे सुदृशां स्थानमण्डपम् ।
पञ्चादि पञ्च (पा ? मा)न्तं वा व्यासं तत्रोजसंख्यया ॥
सभामण्डपशालानां सामान्यमिष्टदैर्घ्यकम् ।
पञ्चादशकरव्यासं त्रिसप्तारत्निदैर्घ्यकम् ॥ २०३ ॥
सैकद्वादशहस्तान्तं चूल्यन्तादिमनोहरम् ।
शालाभिषेकयोग्या सा कर्तव्या प्रागिवानना ॥ २०४ ॥
तदङ्गमध्यमे रङ्गसंयुक्ता च सभा भवेत् ।
मण्डपं दक्षिणे राज्ञां तदुदीच्यां दिशि क्रमात् ॥ २०५ ॥
पट्टाभिषेकसंवासं धामं तत्र प्रयोजयेत् ।
पञ्चसप्तनवारत्निव्यासतार(त्थि ? द्वि)वेदिकम् ॥ २०६ ॥
त्रिचतुष्पञ्चभागं वा वेदिकोदयमीरितम् ।
वेदिकोदयपादोच्चं स्वव्याससममिष्यते ॥ २०७ ॥
अन्तःस्तंभसमायुक्तं त्यक्तमध्यस्थपादकम् ।
द्विषड्भिरष्टमात्रं तु त्रिष्षडङ्घ्रिविशालकम् ॥ २०८ ॥
एकभक्त्यावृतं तत्र जालं तद्बहिष्प्रभम् ।
तुलाभारार्हकं कूटं मण्डपं वा प्रभा भवेत् ॥ २०९ ॥
त्रिहस्तं तोरणस्तम्भं दैर्घ्यं वासं दशाङ्गुलम् ।
नवाष्टसप्तमात्रं वा पृष्ठभागशिखान्वितम् ॥ २१० ॥
वस्तुमध्ये निधातव्यं दक्षिणोत्तरगं यथा ।
तोरणान्तरमुत्सेधं सममेव विधीयते ॥ २११ ॥
नि।विष्टविष्टकं मध्यवक्रतुण्डसमान्वितम् ।

पूर्वापरायतं भर्तृतुलान्तादचलं चरेत् ॥ २१२ ॥

तुलान्तरकराराणां महाराजस्य योग्यताम् ।
कीलितं वितलं मध्ये कुण्डलं सारदारुजम् ॥ २१३ ॥

योजयेद् वक्रतुण्डेन यथाबलसमन्वितम् ।
त्यक्त्वा तु षण्मुखात् षण्डादेवं तु फलकासनम् ॥२१४॥

तत्समाङ्गमितालिम्बी शृङ्खलाबलसंयुतम् ।
वक्रतुण्डद्वयं द्विद्विभूतं यत्नेन योजयेत् ॥ २१५ ॥

वस्तुनश्च चतुर्दिक्षु प्राङ्मुखस्य च तोरणम् ।
स्तम्भं विष्टं तुलामात्रं कुर्यात् साराङ्घ्रिपैः शुभैः ॥ २१६ ॥

वस्तुमध्यगतं बाह्ये परितस्तत्प्रभा भवेत् ।
तत्समं वरिवश्चापि(?) तद्बाह्ये योजयेद् बुधः ॥ २१७ ॥

औदुम्बरवटाश्वत्थन्यग्रोधास्तोरणं भवेत् ।
पीतं रक्तं तथा श्वेतं नीलं कुर्याद् ध्वजं क्रमात् ॥ २१८॥

तुलासमं तत् समुपेत्य भूपतेः
सुखं समास्ताममरेन्द्रदिङ्मुखम् ।
समीक्ष्य राशिं निजहेमसञ्चयं
विराजनावर्धनदो यथा भुवि ॥ २१९ ॥

हेमगर्भयुतं सप्तनवरत्नापभित्तिकम् ।
व्यासेन चतुरश्रा सा व्यासतुल्योच्छ्रिता तलात् ॥२२०॥

दशद्वादशमात्रैर्वा स्तम्भव्यासं प्रकीर्तितम् ।
वृत्तो वा चतुरश्रो वा चावगाहेद् यथाबलम् ॥ २२१ ॥

त्रिहस्तावृतभित्तिः स्याद् दण्डोत्सेधं स्ववेदिका ।
स्तम्भाग्रस्थोऽन्तराविष्टद्यष्टद्वयविभूषिता ॥ २२२ ॥
लुपारूढाग्रविस्तारं समोत्सेधाः प्रशंसिताः ।
सप्तहस्तद्विहस्तादिव्यासोत्सेधेन वेदिका ॥ २२३ ॥
पञ्चहस्तद्विहस्तेन व्यासोत्सेधेन वा भवेत् ।
सभामध्ये निधातव्यं तन्मध्ये च वटक्रिया ॥ २२४ ॥
बहिर्जालककुड्यं स्यात् तद्बाह्ये च प्रभा भवेत् ।
सभा नीव्रसमुत्सेधो विशाला दण्डमानतः ॥ २२५ ॥
त्रयोविंशतिहस्तेन तद्बहिः परिघा भवेत् ।
चतुर्दिक्षु चतुर्द्वारं तोरणं क्षीरपादपैः ॥ २२६ ॥
सोपानं योग्यदेशे तु चतुर्दिशि विधीयते ।
द्वारतुल्योन्नतव्यासं निर्गमद्वारतोरणम् ॥ २२७ ॥
स्तम्भाग्रस्तोरणाविष्टकंसादिष्वष्टमङ्गलम् ।
चक्रवर्तिशिखोपेता द्वारे द्वारे प्रयोजयेत् ॥ २२८ ॥
चित्रान्वितपताकाश्च भेरीश्रीकुम्भदीपिकाः ।
नन्द्यावर्तेन चाष्टौ तु सर्वेषामष्टमङ्गलम् ॥ २२९ ॥
द्वारद्वयोच्छ्रितं शालारक्ष्यवासं यथाबलम् ।
तद्बहिर्जनचारेण बाह्या रक्षा प्रकीर्तिता ॥ २३० ॥
राजेच्छया कुमार्या तद्देव्या कुल्याविमानकम् ।
मालिकान्ते च भूमा वा योजनीया मनोभवा ॥ २३१ ॥

यत्रोचितं नृपतिचित्तवशाद् विमानं
सारालिभोगभवनं च निवारणं च ।

कुड्यं गजाश्वनिलयं युवतीनिवासं
कर्तव्यमाद्यनिखिलं नगरं च युक्त्या ॥ २३२॥

इति मयमते वस्तुशास्त्रे राजवेश्मविधानो नाम

एकोनत्रिंशोऽध्यायः ।

---

## अथ त्रिंशोऽध्यायः ।

द्विजनृपवणिजां वा सद्मनां शूद्रकाणा-
मभिमुखविनिवेशद्वारतारं च तुङ्गम् ।
पृथगथ निजभेदं मण्डनं चापि नाम्ना
सुखमनुगतबुद्धिर्वस्तुवाक्यं मुनीनाम् ॥ १ ॥

त्रिवितस्तिविशालं स्याद् दैर्घ्यं सप्तवितस्तिकम् ।
विस्तारायामतस्तस्मात् षड्द्वादशकराग्रजे ॥ २ ॥

वृद्धया त्रिपञ्चसैकेषु षड्वितरत्यन्तकानिभिः(?)।
पञ्चविंशतिमानानि द्वारतारोदयानि हि ॥ ३ ॥

तदाद्यशयनीयस्य गृहस्य द्वादशैव हि ।
समावृतखल्लूरीणां तानि चोक्तानि पण्डितैः ॥ ४ ॥

नगरग्रामदुर्गाणां द्वादशोक्तानि वेश्मनाम् ।
विस्तारद्विगुणोत्सेधं षण्मात्रं साधिकं भवेत् ॥ ५ ॥

नवमात्राधिकं वाथ सर्वेषां समुदीरितम् ।
सषण्मात्रद्विभागं च सत्रिमात्राद्वितालकम् ॥ ६ ॥

द्वितलं क्षुद्रमानं च त्रिविधं परिपठ्यते ।
स्वव्यासद्विगुणोत्सेधं षण्मात्रं वा द्विमात्रकम् ॥ ७ ॥
अधिकं शुभदं चारं विप्रादीनां गृहे मतम् ।
स्तम्भायामाष्टभागे तु षष्ठांशं तु तत+ति ॥ ८ ॥
नीचमध्येत्यपि द्वारं भूमौ भूमौ विधीयते ।
व्यासद्विगुणतुङ्गं तु नेष्टतारं नृणां गृहे ॥ ९ ॥
स्तम्भायामाष्टभागेन तुङ्गद्वारं सुरालये ।
नन्दपङ्क्त्यंशहीनं वा विस्तारं स्यात् तदर्धतः ॥ १० ॥
++++वशाद् भूमौ भूमावत्र विधीयते ।
विपादपादविस्तारा सार्धो वा योगविस्तरा ॥ ११ ॥
स्तम्भव्याससमो वापि तदर्थवलयद्धनम्(?) ।
त्रिपादं चोत्तराधस्ता+++न्तस्य वाजनम् ॥ १२ ॥
त्रिचतुष्पञ्चषड्भागे भागेन स्तम्भवैपुलम् ।
कवाटबहलं प्रोक्तं देवद्विजमहीभृताम् ॥ १३ ॥
द्विकवाटविशेषेण एक एव प्रकीर्तितः ।
सामन्तप्रमुखादीनां द्विकवाटं प्रशस्यते ॥ १४ ॥
सार्धवेदेषुपातालनन्दरुद्रकरान्विता ।
उच्चानि तानि तल्पानि वेश्माभ्यन्तरतोलीन्द्रः(?)॥ १५ ॥
गुल्फार्धविमलार्धं तु किञ्चित्तीव्रं यथाबलम् ।
वेश्माभ्यन्तरतल्पोच्चे त्रिचतुष्पञ्चभागिके ॥ १६ ॥
द्वित्रिवेदांशतुङ्गं तत्सरदपंपूर्ववर्तीति(?) ।
युग्मे महत्तरेऽल्पे च दक्षिणस्थे कवाटके ॥ १७ ॥

विपुले चायते तस्मिंस्त्र्यंशे पञ्चांशकेतुके ।
उपरिष्टादधस्ताच्च पार्श्वयोस्त्र्यंशमंशकम् ॥ १८ ॥
त्यक्त्वा शेषं प्रवेशेन यदावारं तदुच्यते ।
यथाबलं यथाशोभमधःपट्टैर्दृढीकृतम् ॥ १९ ॥
मध्ये महत्तरे हीने योग्यव्यासकलान्वितम् ।
त्रिचतुःपञ्चषण्मात्रं व्यासार्धं द्वित्र्यंशकम् ॥ २० ॥
सत्रिपादत्रिभागैकनभाजनविकासमम्(?) ।
बाहुली दशमात्रा स्याद्धस्तिहस्ताद्विशालि वा ॥ २१ ॥
वितस्तीनां विधातव्यं नेत्रं यामुद्रपाणिवत्(?) ।
अयुग्मफलकं ग्राह्यं मध्यसन्धिविवर्जितम् ॥ २२ ॥
तल्पस्य भेषणी चैते मध्यं त्यक्त्वा समाहिते ।
कवाटयुगलोपेते यथाबलमभेषणी ॥ २३ ॥
अथ तल्पघनस्यान्यघनाद् द्विगुणविस्तृता ।
दण्डत्रिपञ्चसप्तैव नवैकादशसंख्यया ॥ २४ ॥
अश्वस्कन्धनखा हस्तेऽश्वत्थपत्राग्रसन्निभा ।
स्वस्तिकाभास्तु घटिका मिर्णका वाथवा मता ॥ २५ ॥
श्रीमुखैर्वामदण्डैश्च पिञ्जरीगलकार्गलैः ।
क्षेपणैः सर्पपत्रैश्च गुच्छगैर्वनकैस्तथा ॥ २६ ॥
गुल्फैरन्तर्गतैर्ग्रास्यैर्वालाभैर्मध्यकुण्डलैः ।
विषाणपरिघाक्षुद्रदण्डैर्युक्तं कवाटकम् ॥ २७ ॥
इन्द्रनीलसमोपेतं सर्वचित्रमनोहरम् ।
अघवासान्यलोहैश्च युक्त्या तत्र दृढीकृतम् ॥ २८ ॥

गुल्फैः सार्धैर्ललाटैश्च शृङ्गायोमयपत्रकैः ।
बध्नीयात् सर्वयत्नेन यथाशोभं यथाबलम् ॥ २९ ॥
मुकुलानन्तरं पत्रत्रिनेत्रा सूचिकायता ।
योगोदयत्रिभागैकनिखातं वा यथाबलम् ॥ ३० ॥
तल्पतीव्रस(ना?मा) तीव्रद्विगुणं द्विस्त्रिकान्वितम् ।
पद्मपत्रविचित्राणि पट्टाङ्गस्कन्धपट्टिका ॥ ३१ ॥
प्रवेशदाक्षिणे तल्पे स्थापितव्या मनोहरा ।
सार्गला दक्षिणं योगं वामे योगं सतल्पकम् ॥ ३२ ॥
विदध्याद् वामहस्तेन तल्पं दक्षिणपाणिना ।
घटिकां रोपयेद् विद्वान् युग्मे युग्मे करेण तु ॥ ३३ ॥
घाटनोद्घाटने तल्पे स्वस्वनन्दांशपूजिते ।
भेरीसमानशब्दं च हस्तिसिंहस्वरोपमम् ॥ ३४ ॥
वीणावेणुस्वरं चैव शस्तं कन्धरगर्जितम् ।
क्रोशनं कूजनं सर्वमन्यच्चापि विनिन्दितम् ॥ ३५ ॥
अधस्तादुपरिष्टाच्चु प्रशस्तं घाटनं समम् ।
सच्छिद्रान्त्यार्गलत्वं च योगार्गलविघट्टनम् ॥ ३६ ॥
बन्धुक्षयकरं शत्रुपीडनोपद्रवं सदा ।
स्वयमेव पिधानं यत् स्वयमापवृतं तु तत् ॥ ३७ ॥
तद् द्वारं बन्धुनाशाय संपदं संपदां पदम् ।
वृक्षकर्णावधःस्थूणकूपवृद्धं तथैव च ॥ ३८ ॥
देवायतनविद्धं च विधिविद्धं तथैव च ।
वल्मीकभस्मविद्धं च सिरामर्मादिविद्धकम् ॥ ३९ ॥

विषणाडीसमानं च फणयोः पद्ममेव च ।
स्थूलभावावनं रक्षाद्वारं तद्(तु?)लसितं वरैः ॥ ४० ॥
गमनागमने गजोपरिष्टाद् द्विजधातावरणास्पृशाचा(?) ।
क्षयदं नृपतेर्हितं तु यत्सिपदेऽवनतं विवेशतः (?) ॥
फुल्लप्रवेशने भूपः सुचिरं जीवितं ध्रुवम् ।
पराज्याधिपत्यं च क्षीणत्वं चैव याति सः ॥ ४२ ॥
मध्यद्वारं तु देवानां द्विजानामवनीभृताम् ।
शेषाणामपि सर्वेषामुपमध्यं विधीयते ॥ ४३ ॥
द्वात्रिंशद्देवतांशेषु तेषु माहेन्द्रके पदे ।
राक्षसे पुष्पदन्ते च भल्लाटे च चतुर्ष्वपि ॥ ४४ ॥
तद्दिगीशानमाश्रित्य द्वारं कुर्यात् सुशोभनम् ।
अन्तर्द्वारबहिर्द्वारमेवं युञ्जीत बुद्धिमान् ॥ ४५ ॥
शेषद्वाराणि सर्वाणि सर्वदोषप्रदानि हि ।
ब्राह्मणोऽभिमुखं ब्रह्मापरावृत्तिर्निषिध्यते ॥ ४६ ॥
किमनेन प्रलापेन द्वारमन्यद् विगर्हितम् ।
विशालं व्यक्ततारं स्याद् व्यत्यस्तं रोगदायि तत्(?) ॥
विवृते संवृते कार्ये स्थापिते स्थितिमद् भवेत् ।
उपरिष्टादधस्ताच्च व्यासायामं समं शुभम् ॥ ४८ ॥
अतिदूरे सशब्दत्वमथ धावकधावनम् ।
दोषदं सततं पत्युर्विपदामास्पदं भवेत् ॥ ४९ ॥
जयन्ते वितथे चैव सुग्रीवे मुख्यके पदे ।
जलद्वारं प्रयोक्तव्यं क्रमादन्यद् विवर्जितम् ॥ ५० ॥

पर्जन्ये भृशमार्गे तु पूष्णि भागे नृपे तथा ।
दौवारिके तु रोगांशे नागेऽदितिपदे क्रमात् ॥ ५१ ॥
उपद्वारं प्रयोक्तव्यं तत्सुरुङ्गमिति स्मृतम् ।
एकद्वितलसंयुक्तं बहुरक्षासमन्वितम् ॥ ५२ ॥
पादाधिष्ठानयोर्मानं नीत्वा शेषं यदुन्नतम् ।
तच्चु तन्त्रोपपीठोच्चे पूर्वोक्तद्वारतुङ्गकम् ॥ ५३ ॥
पुरतो वर्णकं गुह्यं सोपानं तल्पसंयुतम् ।
द्वारगोपुरगम्भीरं गृही योगं निधापयेत् ॥ ५४ ॥
सीमां सालं च सीमान्तं वेश्मादीनामुदीरितम् ।
इदानीं द्वारशोभादिगोपुरान्तं तु विस्तृतम् ॥ ५५ ॥
दैर्घ्यमुत्तुङ्गमानं तु संक्षेपाद् वक्ष्यते क्रमात् ।
पञ्चसप्तत्रित्रिधैकादशत्रयोदशमानतः ॥ ५६ ॥
प्रथमावरणे द्वारशोभाव्यासास्तु पञ्चधा ।
त्रिपञ्चाद्यात्रयोविंशद्द्वारशाला करान्तकम् ॥ ५७ ॥
पञ्चविंशत्कराद् यावत् त्रयस्त्रिंशत्करान्तकम् ।
द्वारगोपुरविस्तारं पञ्चैव परिगीयते ॥ ५८ ॥
विस्तारत्रितयो द्व्यंशं पादमर्धं द्विपादकम् ।
तत्समं वाधिकं तेषामायामाः स्युः पृथक् पृथक् ॥ ५९ ॥
उत्तुङ्गं तु तथैवेष्टमथवोन्नतमिष्यते ।
पञ्चांशेभ्यश्च सप्तांशे सप्तांशेभ्यो दशांशके ॥ ६० ॥
स्वव्यासादधिकोत्सेधान् पूर्वोक्तानामुदीरितम् ।
वक्ष्यते द्वारशोभादिपञ्चाख्यालङ्कृतिक्रिया ॥ ६१ ॥

द्विचतुष्कषडायामं नालीगेहं तदर्धतः।
शेषं तु भित्तिविष्कम्भं मध्ये द्वारं प्रयोजयेत् ॥ ६२ ॥
त्रिवर्गमण्डपाकारं नाम्ना (भा ? तत्) श्रीकरं भवेत्।
तदेव परितो भक्त्या महाद्वारसमन्वितम् ॥ ६३ ॥
संवृतं विवृतं वापि लाङ्गलाकारभित्तिकम्।
द्वारोपरिष्टात् सोपानं प्रस्तलस्तुलसंवृतम् ॥ ६४ ॥
सकलं दुस्तकं कोष्ठं काननं मुखपट्टिका।
मध्यपादसमायुक्तं नासिका मध्यमे भवेत् ॥ ६५ ॥
महाद्वारेऽष्टनासं स्या(द्व ? द्वा)मे तच्छीतमिष्यते।
तदैककरं कोष्ठं काननं मुखपट्टिका ॥ ६६ ॥
श्रीभद्रमेतदुद्दिष्टं नाम्ना सर्वेषु पूजितम्।
एकभूमि त्रिधा प्रोक्तं द्वितलं वक्ष्यतेऽधुना ॥ ६७ ॥
चतुष्षड्विस्तृतायामद्वारतारं विशिष्यते।
एकत्रिभागिकैवासायामं तालीगृहं तथा ॥ ६८ ॥
अर्धांशं परितः कुड्यं बहिर्वारमथांशकम्।
तदर्धं तद्बहिः कुर्यात् त्र्यंशगोपानमञ्चकम् ॥ ६९ ॥
सोपानपीठमधिष्ठानं स्तम्भादिपरिमण्डितम्।
महावानेऽष्टनास्यङ्गं श्रीकरं कोष्कृताकृति ॥ ७० ॥
मुखेऽमुखे महानासद्विभागविस्तृतान्विता।
सभद्रं वा विभद्रं वा भद्रं पादसमन्वितम् ॥ ७१ ॥
प्रादक्षिण्येन सोपानं महावाराधिरोहणम्।
नाम्नेदं रतिकान्तं स्यात् सर्वेषां रतिवर्धनम् ॥ ७२ ॥

तदेव शिखरं दश्रचतुर्णासिसमन्वितम् ।
यत् कान्तविजयं नाम्ना सर्वेषां कान्तिवर्धनम् ॥ ७३ ॥
प्रहीणशिखराकारं हारोपेतं तदेव हि ।
द्वारे परीतनास्यङ्गमेतन्नाम्ना सुमङ्गलम् ॥ ७४ ॥
एतद् द्वितलकं प्रोक्तं त्रितलं वक्ष्यतेऽधुना ।
चतुष्पङ्क्तिस्तृतायामं द्वारतारं विशिष्यताम् ॥ ७५ ॥
द्वारस्य पार्श्वयोर्व्यासावंशेनांशेन योजितौ ।
तत्तत्परिवृतं कुड्यमर्धांशेन विधीयते ॥ ७६ ॥
द्वारे न परितो वारं द्विकं चैवात्र नासिकम् ।
गेहद्वयं सगोपानं हारोपेतमुपर्यपि ॥ ७७ ॥
वास्तलं च तयोर्मध्ये द्वारतारं विधीयते ।
द्वारहर्म्यमिदं नाम्ना मर्दलं राजमन्दिरम् ॥ ७८ ॥
षट्पङ्क्तिविस्तृतायामं द्वारतारं विधीयते ।
द्वारस्य पार्श्वयोर्व्यासमेकैकांशेन योजितम् ॥ ७९ ॥
तत्तत्परिवृतं कुड्यमर्धभागेन सम्मतम् ।
बहिः परिवृतं वारमेकैकांशेन योजयेत् ॥ ८० ॥
जलस्थलितयोर्मध्ये द्वारतारं विधीयते ।
बहिष्टात् परितो वारं भागेनैव समन्वितम् ॥ ८१ ॥
व्यासावृतं महांशारं प्रत्येकं चेष्टनासिकम् ।
प्रहीणशिखराकारं हारोपेतमुपर्यपि ॥ ८२ ॥
नासिका बाह्यपादे तु द्विसप्त परिकीर्तितम् ।
द्वारसोपानमार्गं च युक्त्या तत्र प्रयोजयेत् ॥ ८३ ॥

मात्रखण्डमिदं नाम्ना राज्ञामेतज्जयावहम् ।
व्यासायामे दशाष्टांशे द्वारतारं विशिष्यताम् ॥ ८४ ॥
नालीगृहे द्विभागेन परितोऽन्धारमंशकम् ।
अंशेन परितोऽलिन्द्रं हारं भागेन योजयेत् ॥ ८५ ॥
द्विभागं कूटविस्तारं शालायामं षडंशकम् ।
विस्तारे चतुरंशेन कोष्ठकायाममिष्यते ॥ ८६ ॥
हारा भागेन कर्तव्या चूलहर्म्यसमन्विता ।
जलस्थलं तदेवाहुः कूटशालान्तरेऽपि वा ॥ ८७ ॥
एवमादितलं प्रोक्तं द्वितले भागमुच्यते ।
पूर्ववन्नालिगेहं च गृहपिण्डिहरद्रकम् (?) ॥ ८८ ॥
अर्धेन परितः पिण्डिगोपानप्रस्तरान्वितम् ।
उपरिष्टान्महावारमष्टनासिसमन्वितम् ॥ ८९ ॥
शिखरं कोष्ठकाकारमायामार्धेन विस्तरम् ।
मुखेऽमुखे महानासिविभागविस्तृतान्वितम् ॥ ९० ॥
उपर्युपरि वेशं च युक्त्या मध्याङ्घ्रिसंयुतम् ।
प्रादक्षिण्येन सोपानमुपर्युपरि योजयेत् ॥ ९१ ॥
सोपपीठमधिष्ठानं स्तम्भादिपरिमण्डितम् ।
ऊहप्रत्यूहसंयुक्तं नाम्नेदं श्रीनिकेतनम् ॥ ९२ ॥
त्रितलं त्रिविधं प्रोक्तं शुद्धमिश्रतयान्वितम् ।
नानावातायनोपेतमन्तस्सालेषु सम्मतम् ॥ ९३ ॥
अधुना सप्तभौमादि चतुर्भूमांतमिष्यते ।
द्विसप्ताष्टांशके व्यासाद् द्वारे द्वारं विशिष्यताम् ॥ ९४ ॥

नालिगेहं द्विषड्भागं व्यासायामसभित्तिकम् ।
परितो द्व्यंशमानेनालीन्द्रं कुर्याच्चतुष्टयम् ॥ ९५ ॥
हाराचतुष्टयं कुर्यादर्धांशेन समन्ततः ।
तद्बहिस्त्वेकभागेन परितोऽलीन्द्रमिष्यते ॥ ९६ ॥
हाराभागं तु भागेन गृहपिण्डिस्तदर्धता ।
हाराभागेन कर्तव्यं पार्श्वयोः पञ्जरस्य तु ॥ ९७ ॥
सप्रत्यङ्गसहामूलं भूमाभूममुपर्यपि ।
त्रितले खण्डहर्म्यादिमण्डितं वा स्थलान्वितम् ॥ ९८ ॥
उपर्युपरि च ग्रीवा महावारचतुष्टयम् ।
उपर्युपरि युक्त्याङ्घ्रिं योजयेद् द्वारमप्युभे ॥ ९९ ॥
अयुग्मस्तूपिकोपेतं शिरसाम्याङ्गपट्टिका ।
तोरणे जालकं क्षुद्रनीडैः सम्यग्विचित्रितम् ॥ १०० ॥
तले तले महावारे युक्त्या नास्यङ्गसंयुतम् ।
द्वारस्योभयपार्श्वे तु कूटशालान्तरे ततः ॥ १०१ ॥
उपपीठादिरोहार्थं सोपानं चारमिष्यते ।
सोपानाङ्गणकूटस्य त्रिखण्डं शृङ्गमण्डलम् ॥ १०२ ॥
उपर्युपरिसोपानं युक्त्या तत्र प्रयोजयेत् ।
भद्रकल्याणमित्युक्तं नाम्नेदं द्वारगोपुरम् ॥ १०३ ॥
तदेव शिखरे मध्ये नासिका पार्श्वयोर्द्वयोः ।
मुखेऽमुखे तु नास्यङ्गयुक्तं तस्य सुभद्रकम् ॥ १०४ ॥
द्व्यंशं वारितलं गर्भं गेहं तत्पार्श्वयोर्द्वयोः ।
द्विभागं चतुरश्राभं चतुर्नास्यङ्गसौष्टिकम् (?) ॥ १०५ ॥

भद्रसुन्दरमित्युक्तं नाम्ना तत्तंतमेव हि (?) ।
द्विरष्टद्विनवांशेन व्यासे पार्श्वेन योजयेत् ॥ १०६ ॥
स्वव्यासांशं चतुर्भागेऽप्यधिकं स्यात् तदायतम् ।
शेषं युक्त्या प्रकर्तव्यं शुद्धमिश्रतयान्वितम् ॥
एवं सप्ततलं ज्ञात्वा नाम्ना तत् त्रिविधं भवेत् ।
तदेवाधःस्थलं त्यक्त्वा षट्तलं यत्क्रमेण तु ॥ १०८ ॥
सुबलं सुकुमारं च सुन्दरं चेतिकीर्तितम् ।
द्विसप्तविस्तारायामे द्वारतारं विशिष्यताम् ॥ १०९ ॥
गृहपिण्डि च गेहं च पूर्ववत् परिकल्पयेत् ।
हारालीन्द्रं तु पञ्चार्धार्धांशेन परितः क्रमात् ॥ ११० ॥
अलीन्द्रं बाह्यभित्तिं च भागेनांशेन योजयेत् ।
अङ्गणे साष्टिकद्व्यंशं शालायामं षडंशकम् ॥ १११ ॥
जलस्थलं त्रिभागेन कूटशालान्तरे विदुः ।
विस्तारे वा स्थलद्व्यंशं महावारत्रयान्वितम् ॥ ११२ ॥
शेषं पूर्ववदुद्दिष्टं पञ्चभूमं यथाक्रमम् ।
श्रीच्छन्दं श्रीविशालं च विजयं चेति कीर्तितम् ॥११३॥
नाम्नेदं त्रिविधं प्रोक्तं नानावयवशोभितम् ।
तदेव व्यासं व्यायामे द्व्यंशेन परिवर्जितम् ॥ ११४ ॥
महावारद्वयोपेतं कूटकोष्ठं च पूर्ववत् ।
ललितं चैव कल्याणं कोमलं च त्रिधा मतम् ॥ ११५ ॥
नाम्ना चतुस्तलं चैव ग्रामादीनां च वेश्मनाम् ।
त्रिद्व्येकालीन्द्रयुक्तं वा सप्तभौमादिषु त्रिषु ॥ ११६ ॥

शेषं कुड्ये प्रयोक्तव्यं त्रित्रिकैरपि कारयेत् ।
यथाबलं यथाशोभं तथा मण्डनमण्डितम् ॥ ११७ ॥
स्तम्भायामं विशालं च प्रस्तरं पूर्ववद् भवेत् ।
ऊर्ध्वे भूमेरधो भूमेरवधिः प्रथयिष्यते ॥ ११८ ॥
प्रवेशदक्षिणे गर्भमारूढे भित्तिके भवेत् ॥ ११८½ ॥

एकादिसप्तान्ततलानि युक्त्या
त्रिसप्तभेदानि हितानि नाम्ना ।
प्रोक्तानि विप्रादिचतुष्टयानां
मयेन वेशायतनानि वासे ॥ ११९½ ॥

आद्यत्रयं सकलवर्णहितं तदैवै-
श्वर्योपयुक्तमनुजेषु विधीयते हि ।
ग्रामाग्रहारपुरपत्तनके द्वितीयं सर्वं
नृपेशभवनाविहितं सुराणाम् ॥ १२०½ ॥

इति मयमते वस्तुशास्त्रे हारविधानो नाम
त्रिंशोऽध्यायः ।

---

## अथैकत्रिंशोऽध्यायः ।

अथ वक्ष्ये यानानां शयनानां लक्षणं क्रमशः ।
शिबिका च रथं यानं पर्यङ्कादीनि शयनानि ॥ १ ॥
अथ शयने तज्जातान्यपि पीठाद्यासनानि ततः ।
पीठेति(च) शिखरेति मौण्डीति मया त्रिधा मता शिबिका ॥
व्यासायामसमस्ता भेदाः सत्र्यंशशिखरिभित्तिवशात् ।
व्यासायामोत्सेधान्यधुना वक्ष्ये पृथक् पृथक् तासाम् ॥ ३ ॥

व्यासं त्रिवितस्ति स्यादायामं पञ्चकैर्वितस्तिः स्यात्।
अधमं त्रिवितस्ति स्यान्मध्यं तस्मादङ्गुलाधिक्यम् ॥ ४।
तस्मात् त्र्यङ्गुलमधिकमुत्तममेतत्तु कथ्यते मुनिभिः।
विपुलाध्यर्धायामं स्वस्वव्यासं च कर्णमात्रं वा ॥ ५ ॥
व्यासार्धं भित्त्युच्चं शेषं तस्मात् त्र्यङ्गुललक्षणम् (?)।
मध्यममधमं तस्मात् त्र्यङ्गुलहीनं त्रिधोत्तुङ्गम् ॥ ६ ॥
व्यासायामोच्चवशात् त्रिविधोक्ता पैण्डिका शिबिका।
सैकत्रिंशतिमात्रैः सप्तत्रिंशत् सपञ्चकं त्रिंशत् ॥ ७ ॥
मात्रैरथवा विपुलं दैर्घ्योच्चं पूर्वमेव तत् कार्यम्।
उत्कृष्टमध्यमाधमविपुलं पञ्चार्धयुगलमिति मात्रैः ॥ ८ ॥
निजविपुलार्धोत्सेधात् कर्तव्यं सम्यगीष्कायामा (?)।
पञ्चचतुस्त्र्यङ्गुलिभिर्विपुलं सार्धं तु तत्तीव्रम् ॥ ९ ॥
सक्षुद्रपट्टिका(थ ?)वा यानावनिमाञ्जकं प्रयुतम्।
द्व्यर्धं द्विमात्रसार्धैकाङ्गुलयुक्तत्रिहस्तं स्यात् ॥ १० ॥
व्यासं त्रिपादमर्धं तयोस्तु मध्यं च तत्तुङ्गम्।
गोलार्धाकृतिकं वा छत्राभं वाथ वेत्रभेदनिभम् ॥ ११ ॥
हस्तेषिकयोर्मध्ये षड्भागैः कम्पकानि चत्वारि।
सार्धद्व्यङ्गुलविपुलं द्व्यङ्गुलमर्धार्धमात्रविस्तारम् ॥ १२ ॥
अर्धं त्रिपादाङ्गुलकमुत्सेधं ह्येव कम्पकानां तु।
अधरोर्ध्वे चैकांशाङ्गुलिकं फलकादिरपि युक्तम् ॥
मध्यमकम्पं त्यक्त्वा युक्तिवशान्मध्यभित्तिमाने तु।
मध्ये द्व्यंशे फलका नरनारीचक्रवाकशोभयुतम् ॥ १४ ॥

वल्लीचतुष्पदाद्यैः संयुक्ता नाटकादिकैरपि च ।
हस्ताधिकयोर्मध्ये व्यालस्थानं विधीयतेऽग्रे तु ॥ १५ ॥
स्वव्यासकर्णमात्रमुदितं निर्गमनमुष्टिबन्धं स्यात् ।
तदधो ह्रस्वाङ्घ्रियुतं तदधोभागेन तुङ्गमेव स्यात् ॥
तत्समनिर्गमयुक्तं स्वव्यासार्धं तु कम्पकं पुरतः ।
नक्रमुखेन तु युक्तं लोहैनैवाथवेभदन्तेन ॥ १७ ॥
भक्तय(?)विपुला दैर्घ्यंशरसप्तकनन्दकाख्यदशरुद्राः ।
कम्पव्यासघनाभ्यां स्तम्भव्यासं तु बाहल्यम् ॥ १८ ॥
दैर्घ्याधिकाग्रमूले कर्तव्या युक्तिबलवशात् (तु) शिखा ।
आत्तविशालं धृत्वेधितयोर्मूले तदग्रे च ॥ १९ ॥
पञ्च चतुष्टयमात्रं निर्गमनं पद्मचित्रयुतम् ।
तद्ग्रमलाग्रहहस्तं + तमानिं वा समानकर्णं वा ॥ २० ॥
हत्वेधितोपरिष्टाद् विपुलं कम्पं च वा फलकम् ।
एकाहिशनसमोच्चं शोभार्थं वा फलार्थं स्यात् ॥
तत्रैव ह्रस्वपादैर्गुलिकाभिः शोभितं तदुक्त्यापि ।
अथवा मुखतो द्वारं पञ्चैत्रांशं गुणांशकं वा तु ॥ २२ ॥
त्रिचतुर्मात्रविशालं षट्सप्ताष्टाङ्गुलोत्सेधम् ।
पादं य(कु ? द्) भक्तं तदवलग्नं भैरिकं सुवृत्तं च ॥ २३ ॥
गुल्फायामसुपट्टैर्मतिभिः पट्टैस्तु कीलकं कुर्यात् ।
एवं प्रोक्ता शिबिका चैठीकानापि चित्राङ्गा ॥ २४ ॥
स्वव्याससमेन तत्सेधः स्वव्यासार्धं त्रिभागभित्तिश्च ।
पादसमेता शिखरोपेता सा शेखरीति संयुक्ता ॥ २५ ॥

मौण्डी मुण्डाकारा शिखराभिर्येत्र भित्तिसंयुक्ता ।
व्याससमोत्सेधयुता मण्डपमथमण्डपादिताभिमता ॥ २६ ॥

पद्माध्यतत्तुमानं तासां सम्यक् प्रयोक्तव्यम् ।
शार्कालरस्तिमिश + + पनसो निम्बार्जुनौ मधूकश्च ॥ २७ ॥

याने शयने चैते प्रोक्ता वृक्षाः पुराणैस्तु ।
[श्रीनतसुखमधिरुह्य यान्तं श्रीमत्तत्प्रकटनिजात्मनस्य ॥

तद्यानं तदपि शिबिकालक्षणयुक्तं तत्संपदं सदध्या ।

इति शिबिकाध्यायविधिः ।?]

द्विचक्रबाह्ये विस्तारं षट्सप्ताष्टवितस्तियुक् ॥ २९ ॥

चक्रनाभिद्वयं नाभिच्छायामोक्षान्तरस्य तु ।
द्वारबाह्यं च तावत् स्याद् विस्तारार्धाधिकायतम् ॥

चतुस्त्रिद्व्यङ्गुलोत्सेधं बाहल्यं पञ्चभारकम् ।
त्रिसप्तनवधा तत्र व्यासोत्सेधाश्च पूर्ववत् ॥ ३१ ॥

आयामानुगतं तिर्यक् कुल्यकम्पं दृढीकृतम् ।
मध्यभारोपरि तुलामध्यनिर्गमनाग्रतः ॥ ३२ ॥

ललाटं तु त्रिहस्तादि तदग्रं कुटिलाकृति ।
मध्यभार इति प्रोक्तं कूपरो युगभागभाक् ॥ ३३ ॥

भारोपर्यङ्गुलघनफलकाप्रस्तरो भवेत् ।
अक्षमक्षोत्तरं चक्रभद्रभारोपयानकम् ॥ ३४ ॥

उत्सेधं पञ्चषट्सप्तबाहल्यं द्वित्रिमात्रकम् ।
अष्टादशाङ्गुलं दैर्घ्यं पार्श्वे भागोपयानकम् ॥ ३५ ॥

पोतिकाकारसंयुक्तं मयपट्टैर्दृढीकृतम् ।
अक्षोर्ध्वोत्तरबाहुल्यतुल्यच्छिद्रात्ममध्यमम् ॥ ३६ ॥
तदधस्त्वक्षरक्षार्थं पार्श्वयोर्बन्धनं भवेत ।
उपधानविधानं तु तुल्यव्यासार्धतीव्रकम् ॥ ३७ ॥
अक्षस्यावधि दैर्घ्यं स्याद् दारु चेत् चतुरश्रकम् ।
अयःपट्टैश्च कीलैश्च स्वशिखाभिर्दृढीकृतम् ॥ ३८ ॥
सार्धबद्धकरं पादोत्सेधचक्रार्धमिष्यते ।
अक्षान्तरसमं चक्रं विस्तारं परिकीर्तितम् ॥ ३९ ॥
नाभिर्दशाङ्गुलोत्सेधा वितस्त्यायामविस्तृतम् ।
तत्पट्टनाभिमध्ये तु द्वात्रिंशद्वा त्रिरष्टकम् ॥ ४० ॥
अष्टाष्टकं तु वा तत्र युक्त्या संख्यासमन्वितम् ।
अकारवर्णमूलाग्रत्र्यङ्गुलं सार्धमात्रकम् ॥ ४१ ॥
मूले षण्णवमाकारं मूलेऽग्रे शिखयान्वितम् ।
रोहारोहघने चैव अक्षोत्तारं तथा बकम् ॥ ४२ ॥
भारस्योदयपट्टैश्च कीलकैः पट्टबन्धकैः ।
योग्यं च द्व्यंशपादांशैरयःपट्टैश्च बन्धयेत् ॥ ४३ ॥
तत्स्थाने चोपपीठे च गुह्यं युक्तिवशान्नयेत् ।
अक्षान्तेऽक्षोत्तरबन्धे दारुकीलैः प्रयोजयेत् ॥ ४४ ॥
पादोत्सेधद्विभागैकं भागं स्याच्चूलिकोच्छ्रयम् ।
अग्रे पार्श्वे तले वा तु गलिका पट्टिकान्तरे ॥ ४५ ॥
पृष्ठे पञ्चाङ्गुलोत्सेधं मुखपट्टिकयावृतम् ।
अन्तरे कर्णत्रातस्य मुकुलाग्रोत्तरान्तिका ॥ ४६ ॥

भारो भारोपधानं च अक्षमक्षोत्तरं तथा ।
कूबरः कूबरस्याग्रे ह्ययपट्टैश्च कीलकैः ॥ ४७ ॥
तत्तद्योगैश्च तत्स्थाने बन्धयेश्चाभवेदपि(?) ।
अक्षमक्षोत्तरं मध्ये दारुकीलं प्रयोजयेत् ॥ ४८ ॥
सर्वराजाधिपत्यैश्च राजयुद्धैर्महोत्सवैः ।
मङ्गले देवपूजायां सोमयागं तथैव च ॥ ४९ ॥
इत्येव कर्मणादिष्टं रथारोहणमिष्यते ।
वासद्वित्रिगुणायामं वक्रं तत्तत्समन्वितम् ॥ ५० ॥
सप्ततालं तु वा दैर्घ्यं त्रिचतुर्मात्रविस्तृतम् ।
स्वस्वपादवशात् तत्र पूर्वं चाधरतो दिशि ॥ ५१ ॥
हारोपर्यन्तरोपेतं ह्रस्वपादोत्तरान्वितम् ।
चतुष्षष्टिकसंख्याभिः स्तम्भयुक्तसमन्वितम् ॥ ५२ ॥
षट्सार्धपञ्चपञ्चैव तालेन चरणोदयम् ।
सप्ततालं तुलादैर्घ्यं त्रिचतुर्मात्रविस्तरम् ॥ ५३ ॥
स्वस्वपादवशात् तत्र पूर्ववच्चोत्तरादिकम् ।
एकद्वित्रितलोपेतमेकं वाथ चतुर्मुखम् ॥ ५४ ॥
मण्डपाकारसंयुक्तं शालाकारशिरःक्रियम् ।
त्रिचतुष्पञ्चषट्सप्तहस्तचक्रान्तमिष्यते ॥ ५५ ॥
चक्रोत्सेधं चतुष्पञ्चषट्क+वेष्टतीव्रकम् ।
अक्षमक्षोत्तरं चैव वारो वा यानकं यथा ॥ ५६ ॥
अष्टाष्ट(द्वि?वि)पुलोत्तुङ्गैर्दारुकीलैर्दृढीकृतम् ।
एकद्वित्रितलोपेतैः प्रासादवदलङ्कृतम् ॥ ५७ ॥

षोडशस्तम्भसंयुक्तं दिग्दिक्षु मुखभद्रकम् ।
सर्वालङ्कारसंयुक्तं रङ्गं तद्योजयेद् दृढम् ॥ ५८ ॥
तथैव शिल्पिमानीय योजनीयं विचक्षणैः ॥ ५८½ ॥

पादुकं मिथुनांशकपद्मकं
लेखिते चरणांशकमूर्तिकम् ।
(तु ? ति)र्यगादिकृतपट्टिककल्पितं
पद्मबोधिरसकुड्मलमेव च ॥ ५९½ ॥

+त्रिपादकरनन्दवर्गकैर्द्विप्रभागमिति गण्यमिष्यते ॥ ६० ॥
पद्मं तु पट्टीसहकर्णप्रस्तरं व्यालं तु नक्रक्रममेव शोभितम् ।
कर्णांशपद्मं जगति प्रतिष्ठां नराप्रवेशं कुमुदं तु भागम् ॥ ६१ ॥
वस्वंशकर्णं गुणभागपट्टी शिवांशवेदी सकलं धरातलम् ।
शरण्यपद्मं च तु कर्णवेदिका वर्णेन वेदी गलपक्षमंशम् ॥ ६२ ॥
प्रस्तरांशमुनिदेवसानकं नाट्यताल उपधानकल्पितम् ॥ ६२½ ॥

इति मयमते वस्तुशास्त्रे यानाधिकारो नाम

एकत्रिंशोऽध्यायः ।

---

## अथ द्वात्रिंशोऽध्यायः ।

त्रिवितस्तिकृतव्यासं पञ्चवितस्त्यायतं च शयनं स्यात् ।
विस्तारायामाभ्यां त्रिःपञ्चममात्रमाधिकं ज्येष्ठम् ॥ १ ॥
चतुरङ्गुलेन पञ्चाङ्गुल्यैर्वा व्यासयुक्तमिषिकायाः ।
व्यासार्धं बाहल्यं व्यासत्र्यंशेन मध्यपट्टं स्यात् ॥ २ ॥

व्यासत्रिचतुर्भागं वाहल्यं चैषिकायास्तु।
पृष्ठललाटेऽधिकयोर्निर्गमनं व्यास एव कर्णे वा ॥ ३ ॥
पार्श्वेऽधिकाग्रमूले मध्याशिखा वा यथावलं कुर्यात्।
एवं निर्गमनं स्यात् पादाधिकयोर्यथावलं कुर्यात् ॥ ४ ॥
शेषकपादो गमनं सार्धवितस्तिर्वितस्तिरथ हीनम्।
स्वोद्गमचतुरंशो वा त्र्यंशो वा पादमेव विष्कम्भम् ॥ ५ ॥
पादशयने हि हिता ऋजुपादव्याघ्रपादमृगपादाः।
ह्रस्वेऽधिकसिद्धशिखास्वयनामासदशप्रकाराः स्युः(?) ॥६॥
फलका पर्यङ्को वा पट्टविचित्रापि वाधिका कार्या।
शयनविशालव्यासा तुङ्गे वै पादपट्टिकोपेता ॥ ७ ॥
तोरणमूर्ध्वोपमिता कुण्डककीलार्धसार्धवकतुण्डा।
पर्यङ्कशिबिका(का)र्या विजरीविप्रादिप्रोष्टनाकिञ्चित् (?) ॥
पूर्वशिरः पर्यङ्कं दक्षिणमुखयनुवशमपि (?)।
दक्षिणतःशिरसं वा पश्चिममुखमन्यदिङ् नेष्टम् ॥ ९ ॥
व्याघ्रमृगपादशयनं द्विजनृपयोः शेषयोस्तु भृशशेषम्।
नवसप्तपञ्चविंशत्यङ्गुलविस्तारतः समोत्सेधम् ॥ १० ॥
उत्कृष्टमध्यमाधमासनमृजुपादं शयनवत् कार्यम्।
समचतुरश्रं पीठं (व्या ? ह्या)सनमिति सायतं प्रोक्तम् ॥
अष्टांशाधिकदैर्घ्यं द्विगुणायतमेव विशालं तु।
सिंहेभभूतवृषयुग् देवानां विप्रनृपयोस्तु ॥ १२ ॥
सिंहेभयुक्तमेवं त(त्त)न्नाम्नाभिधानं स्यात्।
सोत्तरमब्जकपोतं लिङ्गान्तरिताभिर्युक्तम् (?) ॥ १३ ॥

नानाचित्रविचित्रं द्युसदां राज्ञां च वक्ष्येऽथ ।
उपपीठयुक्तमेतद्युक्तेऽर्थे पद्मबन्धयुतम् ॥ १४ ॥
कर्णे मध्ये मध्ये स्तम्भमृगेन्द्रैर्विचित्रं स्यात् ।
तदुपरि तोरणयुक्तं सविजिकमथ हेमरत्नाढ्यम् ॥ १५ ॥
सिंहासनमिदमुदितं मुनिभिर्यथाबलाङ्गसंयुक्तम् ।
एतद्व्यासं व्यासनफलकमपि द्विगुणदैर्घ्यकं पादम् ॥ १६ ॥
पञ्चाङ्गुलान्तमुन्नतमुत्सेधार्धं तु वाजनं चोर्ध्वे ।
अपरार्धमुत्तरं स्यात् तावद्व्यासं तदन्तरं घातम् ॥ १७ ॥
व्यासायामे मध्ये पञ्चांशैकांशमायतं च गतः ।
विष्टरमष्टोत्तरमायतनं चोत्तरमन्यथाशोन्तम् (?) ॥ १८ ॥
जात्युत्तमायतव्यावासनशयनी यथा तथा चेष्टा(?) ।
उक्तोत्सेधायामा स्वस्वांशेनैव वर्धिता हीना ॥ १९ ॥
आद्यं षडङ्गुलं स्याद् द्व्यङ्गुलवृद्ध्या करान्तमाना च ।
दशधा विस्तृतमुदितं चतुरङ्गुलविपुलमपि वदन्त्येके ॥
चतुरश्रमायताश्रं वृत्तं विपुलार्धमुत्तुङ्गम् ।
व्यासषडष्टांशं वा हरिच्चरणयुतं सकम्पवाजनकम् ॥२१॥
तदुपरि पद्मदलं स्यात् कर्णिकयालङ्कृतं यथाशोभम् ।
शोभनमिदमिदमुदितं सर्वे देवेषु पूजितं ह्येव ॥ २२ ॥
नानाचित्रसमेतं सुगृहार्चनपीठमेवमिदमुदितम् ।
न्यग्रोधोदुम्बरवटपिप्पलबिल्वामलसारदारुमयम् ॥ २३ ॥
ते सर्वे योग्याः स्युः पीठेऽस्मिन् सर्वसिद्धिकरणीयम् ॥

अष्टघनरश्मिभिरतुर्यगृहवृद्ध्या
भानुदिशि सर्वमहनाद्यक्र्षिहारैः ।

आयव्ययगुह्यसुडञ्जुरंशमितिवारै-
र्यानशयनविधिरथासनमिदं स्यात् (?) ॥ २४३ ॥

इति मयमते वस्तुशास्त्रे यानशयनाधिकारो नाम
द्वात्रिंशोऽध्यायः।

---

अथ त्रयस्त्रिंशोऽध्यायः।

निष्कलं सकलं मिश्रं लिङ्गं चेति त्रिधा मतम्।
निष्कलं लिङ्गमित्युक्तं सकलं बेरमुच्यते ॥ १ ॥
मुखलिङ्गं तयोर्मिश्रं लिङ्गार्चाकृतिसन्निभैः।
बिम्बमूर्तिः शरीराभा विश्वमूर्तिस्वरूपकैः ॥ २ ॥
छन्नदेहप्रतिच्छन्दप्रतिमाङ्कैस्तु नामभिः।
दृश्यो देवसमाख्यातो निष्कलं वक्ष्यतेऽधुना ॥ ३ ॥
श्वेता रक्ता च पीता च विप्रादीनां हिता सिता।
एकवर्णा घना स्निग्धा शिला भूमिनिमग्नका ॥ ४ ॥
व्यासायामवती ग्राह्या यौवनातिमनोरमा।
वातातपानलालीढा मृद्वी क्षाराम्बुसंश्रिता ॥ ५ ॥
दुःस्थानस्थानरूक्षा च या कर्मान्तरयोजिता।
रेखाविन्दुकलङ्काढ्या वृद्धा वक्रा च या शिला ॥ ६ ॥
सशर्करा विवर्णा च सत्रासायतनस्थिता।
निःस्वना सदरीभेदा सगर्भा निन्दिता वरैः ॥ ७ ॥
एकवर्णा घना स्निग्धा मूलाग्रादार्जवान्विता।
गजघण्टारवा या सा पुंशिलेति प्रकीर्तिता ॥ ८ ॥

स्थूलमूला कृशाग्रा या कंसतालसमध्वनिः।
स्त्रीशिला कृशमूलाग्रा स्थूला षण्डेति निःस्वना ॥ ९ ॥
सकलं निष्कलं मिश्रं कुर्यात् पुंशिलया सुधीः।
युञ्जीयात् स्त्रीशिलाः सम्यङ् नारीवेरं च पिण्डिका ॥ १० ॥
षण्डोपलेन कर्तव्यं ब्रह्मकूर्मशिले तथा।
नन्द्यावर्तशिले वापि कर्तव्या तेन चात्मना ॥ ११ ॥
प्रासादतलकुड्यादि कर्म कुर्याद् विचक्षणः।
सा शिला त्रिविधा बाला मध्यमा स्थविरेत्यपि ॥ १२ ॥
टङ्कघातादिमृद्वी या मन्दपक्वेष्टकोपमा।
शिला बाला मता तज्ज्ञैः सर्वकर्मसु निन्दिता ॥ १३ ॥
स्निग्धागम्भीरनिर्घोषा सुगन्धा शीतला मृदुः।
नबिलावयवा तेजःसहिता यौवना शिला ॥ १४ ॥
मध्यमा सर्वयोग्या स्यात् सर्वकर्मार्थसिद्धिदा।
मत्स्यमण्डूकशकला रूक्षा वृद्धा शिलाशिवा ॥ १५ ॥
रेखाबिन्दुकलङ्काढ्या सा त्याज्या सर्वयत्नतः।
छेदने तक्षणे यत्र मण्डलं दृश्यते यदि ॥ १६ ॥
सा शिला गर्भिणी विद्वांस्तां प्रयत्नेन वर्जयेत्।
मुखमुद्धरणेऽधोंऽशमूर्ध्वभागं शिरो विदुः ॥ १७ ॥
शिलामूलमवाक्प्रत्यगुदग्रं प्रागुदग्दिशि।
अग्रमूर्ध्वमधोमूलं पाषाणस्य स्थितस्य तु ॥ १८ ॥
नैर्ऋत्यैशानदेशाग्रा वह्न्यग्रा वह्निवायुगा।
उत्तरायणमासे तु शुक्लपक्षे शुभोदये ॥ १९ ॥

प्रशस्तपक्षनक्षत्रे मुहूर्ते करणान्विते।
गच्छेल्लिङ्गं समुद्दिश्य वनं चोपवनं गिरिम्॥ २०॥
अथवा शुद्धदेशे तु भूमग्नोपलसंयुतम्।
ऐन्द्र्याशायां तु सौम्यायामैशान्यां वा विशेषतः॥ २१॥
निमित्तैः शकुनैर्योग्यैः सह मङ्गलशब्दकैः।
स्थापकः स्थपतिः कर्ता कृतकौतुकमङ्गलः॥ २२॥
स्थापकः स्थपतिश्चैव सितवस्त्रपरिच्छदौ।
श्वेतगन्धानुलेपौ तौ सितवस्त्रोत्तरीयकौ॥ २३॥
सितपुष्पशिरोयुक्तौ प्राप्तपश्चाङ्गभूषणौ।
गन्धैः पुष्पैश्च धूपैश्च मांसेन रुधिरेण च॥ २४॥
पायसोदनमत्स्यैश्च भक्ष्यैश्चापि पृथग्विधैः।
अर्चयेदीप्सितान् वृक्षानुपलान् वनदेवताः॥ २५॥
भूतक्रूरबलिं दत्त्वा कर्मयोग्यां वरेच्छिलाम्।
स्थपतिर्वरवेषाढ्यो मन्त्रयेत् प्राङ्मुखो वरः॥ २६॥

अयं मन्त्रः—

ॐ। अपक्रामन्तु भूतानि देवताश्च सगुह्यकाः।
युष्मभ्यं तु बलिर्भूयात् क्रूराश्च वनदेवताः॥ २७॥
कर्मैतत् साधयिष्यामि क्रियतां वस्तुपर्ययः।
एवमुक्त्वा नमस्कृत्य शिलाश्छेत्तुं समारभेत्॥ २८॥
तत्रैव स्थापको युक्त्या जुहुयात् तदुदग्दिशि।
हेमसूच्यष्टिलाभ्यां तु शोधयेत् प्रथमं पुनः॥ २९॥

तीक्ष्णशस्त्रेण महता यष्टिलेन प्रहारयेत् ।
इष्टायामविशालाभ्यामधिकं ग्राह्य यत्नतः ॥ ३० ॥
चतुरश्रसमं कृत्वा मुखभागं विचिन्त्य च ।
शुद्धिं कृत्वार्चयित्वा तु गन्धाद्यैर्विधिपूर्वकम् ॥ ३१ ॥
लिङ्गं वा पिण्डिकां बेरमौपलं वार्क्षमेव वा ।
वस्त्रैरावेष्टयित्वा तु रथे संस्थाप्य यत्नतः ॥ ३२ ॥
सर्वमङ्गलसंयुक्तमानीयात् कर्ममण्डपे ।
यथोक्तविधिना सम्यक् कुर्यादन्तरितेन च ॥ ३३ ॥
यथोक्तविधिना नैव लभ्यते यदि पिण्डिका ।
गृहीत्वान्यत्र पूर्वोक्तविधिना तदुदग्दिशि ॥ ३४ ॥
नीत्वा तत्र खनित्वा तु शुभऋक्षमुहूर्तके ।
गृहीत्वा विधिवद्धुत्वा शुद्धिं कृत्वाम्भसा ततः ॥ ३५ ॥
गन्धाद्यैरर्चयित्वा तु सर्वमङ्गलघोषणैः ।
आनीयात् कर्म पूर्वत्र दिशि कोष्ठादिमुच्यते ॥ ३६ ॥
लिङ्गमानाद् विमानं वा लिङ्गं वा हर्म्यमानतः ।
गर्भमध्ये च सूत्रात् तु वामेऽर्चालिङ्गमेव वा ॥ ३७ ॥
स्थापयेत् किञ्चिदंशं तु आश्रयित्वा विचक्षणः ।
त्रिःसप्तांशे कृते द्वारे ब्राह्मेंऽशे मध्यमे भवेत् ॥ ३८ ॥
कृत्वा षडंशकं तच्च वामे ह्यंशं व्यपोह्य च ।
तदंशमग्रं नीत्वा तु प्रागुदग्गतसूत्रकम् ॥ ३९ ॥
तद् ब्रह्मसूत्रमित्युक्तं तत्सूत्रं शिवमध्यमम् ।
गर्भार्धमधमं श्रेष्ठं पञ्चत्रिंशं शिवायतम् ॥ ४० ॥

भवन्ति नव लिङ्गानि तयोर्मध्येऽष्टभाजिते ।
श्रेष्ठमध्यकनिष्ठानि त्रित्रिभेदानि तानि हि ॥ ४१ ॥
नागरे नागरस्योक्तं मानं लिङ्गस्य मन्दिरे ।
विकारांशे तदायामे भूतगङ्गाग्निविस्तरम् ॥ ४२ ॥
जयदं पौष्टिकं सार्वकामिकं नागरे विदुः ।
गर्भे त्रिसप्तभागे तु दशांशं द्राविडेऽधमम् ॥ ४३ ॥
त्रयोदशांशकं श्रेष्ठं गर्भेऽष्टांशे तु पूर्ववत् ।
त्रिःसप्तांशे निजायामे षट्पञ्चचतुरंशकम् ॥ ४४ ॥
जयदादिविशालं तत् पूर्ववद् द्राविडे मतम् ।
वेसरे पञ्चपञ्चांशे गर्भागारे विमानके ॥ ४५ ॥
त्रयोदशांशकं हीनं श्रेष्ठं स्यात् षोडशांशकम् ।
तयोर्मध्येऽष्टभागे तु नव लिङ्गानि पूर्ववत् ॥ ४६ ॥
पञ्चपञ्चांशके दैर्घ्ये वसुधातुरसांशके ।
वेसरस्योदितं व्यासं पूर्ववज्जयदादिकम् ॥ ४७ ॥
विकारपरिधौ भूतव्यासः सर्वत्र कीर्तितः ।
गर्भमानमिदं प्रोक्तं हस्तमानं तु वच्म्यहम् ॥ ४८ ॥
आरभ्यैककरं नन्दहस्तान्तं षट्षडङ्गुलैः ।
वृद्ध्यायतास्त्रयस्त्रिंशत्सङ्ख्या लिङ्गस्य कीर्तिताः ॥ ४९ ॥
पञ्चारत्निविमानाद्या द्वादशक्ष्माद्यसद्मनः ।
क्रमेणैव त्रयस्त्रिंशत्सङ्ख्या तासां विधीयते ॥ ५० ॥
केचित् त्र्यङ्गुलवृद्ध्या तु वदन्त्येकादिहस्ततः ।
आयादिसम्पदामर्थं मानादेकाङ्गुलक्षयात् ॥ ५१ ॥

प्रवृद्ध्योत्तुङ्गमात्तव्यं तत्र दोषो न विद्यते ।
पञ्चपञ्चाङ्गुलं मूलाद् वृद्धयाष्टककलाङ्गुलैः ॥ ५२ ॥
वृद्ध्या लिङ्गायतं शस्तं प्रत्येकं नवमानकम् ।
क्षुद्राल्पमध्यमोत्कृष्टहर्म्याणामुदितं क्रमात् ॥ ५३ ॥
द्वारोदयसमं श्रेष्ठं त्रिभागोनं कनिष्ठकम् ।
स्तम्भोत्सेधेनवांशे तु मुनिभूतांशकोदयम् ॥ ५४ ॥
तत्तद्गर्भेऽष्टधा भक्ते नव लिङ्गोदयाः स्मृताः ।
नागरादिषु सौधेषु प्रोक्तव्यासानि पूर्ववत् ॥ ५५॥
प्रासादशिखरग्रीवस्तूप्योऽधिष्ठानमानकैः।
केचिद् वदन्ति मुनयः कुम्भयोन्यादयो वराः ॥ ५६ ॥
ग्रीवोत्सेधस्य मानं तु मानाङ्गुलैर्विभाजयत् ।
वृद्धया हान्याङ्गुलिच्छेदं परिहृत्य विचक्षणः ॥ ५७ ॥
उत्सेधेऽष्टगुणैः सप्तविंशद्भिर्हरणे ततः ।
शेषमश्वयुजाद्यं तु नक्षत्रं तु चतुर्गुणे ॥ ५८ ॥
नवभिर्हरणे शिष्टमंशकं तस्करादिकम् ।
भुक्तिः शक्तिर्धनं राजा षण्डश्चाभयकं विपत् ॥ ५९ ॥
समृद्धिरिति विख्यातान्यंशकानि नव क्रमात् ।
तस्करं च विपत् षण्डं निन्दितं वस्तुपारगैः ॥ ६० ॥
उत्तुङ्गवसुनन्दाग्निगुणैकांशाष्टभिर्हृते ।
शिष्टं धनमृणं चैव योनिकं स्याद् यथाक्रमम् ॥ ६१ ॥
धनाधिकमृणं क्षीणं मानं तत् सम्पदां पदम् ।
योनिषु ध्वजसिंहश्च वृषो हस्ती शुभावहाः ॥ ६२ ॥

तुङ्गं नवगुणं कृत्वा सप्तभिः क्षपयेत् ततः ।
शेषं सूर्यादिवारं स्यात् क्रूरास्तत्र विवर्जिताः ॥ ६३ ॥
ग्रामादीनां च कर्तुश्च नक्षत्रेणाविरोधि यत् ।
तल्लिङ्गं देशदेशेशदेहिनां शुभकारणम् ॥ ६४ ॥
इष्टायामविशालेन चतुरश्रीकृतं समम् ।
जातरूपं तु तद् बिम्बं छेदनीयमथोचितम् ॥ ६५ ॥
छन्दमष्टाश्रकं षोडशाश्रं नाम्ना त्रिकल्पकम् ।
वृत्तमाभासकं लिङ्गं तच्छेद्यं स्यात् त्रयात्मकम् ॥ ६६ ॥
त्रिधा कृत्वायतं मूले ब्रह्मांशं चतुरश्रकम् ।
अष्टाश्रं वैष्णवं मध्ये वृद्धमूर्ध्वांशमीश्वरम् ॥ ६७ ॥
इष्टविष्कम्भमानेन चतुरश्रीकृतं समम् ।
कर्णायतर्क्षे कर्णाभ्यामिष्टमष्टाश्रकं कृतम् ॥ ६८ ॥
चतुस्त्र्यंशकयोर्मध्यं मध्यपट्टमिति स्मृतम् ।
व्यासे पट्टांशके त्र्यंशे मध्यपट्टं त्रिधोदितम् ॥ ६९ ॥
कोणान्तात् पट्टसूत्रेऽङ्के तिर्यक्सङ्गतसूत्रकम् ।
पट्टार्धेनाङ्कितं यत्तु षोडशाश्रं तदुच्यते ॥ ७० ॥
एवमश्रान्तरे धीमान् योजयेत्तु विचक्षणः ।
कोटिच्छेदेन वृत्तं स्यान्निम्नं नैवोन्नतं यथा ॥ ७१ ॥
आद्यं तु सर्वतोभद्रं द्वितीयं वर्धमानकम् ।
शिवाधिकं तृतीयं स्याच्चतुर्थं स्वस्तिकं भवेत् ॥ ७२ ॥

अथ जगदमराणां सर्वतोभद्रमिष्टं
सुखदमवनिपानां वृद्धिदं वर्धमानम् ।

धनदमिह विशां वै शम्भुभागाधिकं य-

च्छुभदमथ परेषां स्वस्तिकं तच्चतुर्णाम् ॥ ७३ ॥

त्रिंशद्भागे सर्वतोभद्रलिङ्गे मूले मध्येऽ(ग्रे) दशांशं क्रमेण ।

वृत्तं तुल्यं सर्वतः शम्भुभागं विप्राणां तद् भूपतीनां प्रशस्तम् ॥

वेदभूतरसभागिकैरथो भूतषण्मुनिपदैरधः पदम् ।

षट्कसप्तवसुभागया ततः सप्तनागनवभागया पुनः ॥ ७५ ॥

वर्धमानमुदितं चतुर्विधं ब्रह्मविष्णुशिवभागतः क्रमात् ।

सर्वसम्पदुदयं जयप्रदं पुत्रवृद्धिदमिदं महीभृताम् ॥ ७६ ॥

सप्तसप्तवसुभागया ततः पञ्चपञ्चकषडंशकैरपि ।

वेदवेदशरभागया ततो बध्य बन्धयुगभागया पुनः ॥

उक्तमत्र हि मया चतुर्विधं तच्छिवाधिकमजादिभागिके ।

सर्ववस्तुदमिदं विशालकं सर्वत्रर्णयमिनामुदीरितम् ॥ ७८ ॥

उक्तायामे स्वस्तिके नागभागे

मूले द्व्यंशं मध्यभागे गुणांशम् ।

पूजाभागे चातुरंशं क्रमेण

चोक्तं शूद्रे सर्वकामप्रदं तत् ॥ ७९ ॥

लिङ्गप्रमाणं समाप्तम् ।

लिङ्गं सुरार्चितं धारालिङ्गं साहस्रलिङ्गकम् ।

त्रैराशिकं तु सर्वेषां सर्वकामफलप्रदम् ॥ ८० ॥

इष्टायामसमोपेतं स्वायामार्धार्धविस्तरम् ।

शेषं पूर्ववदुद्दिष्टं नाम्ना सुरगणार्चितम् ॥ ८१ ॥

धारालिङ्गं सर्वलिङ्गे मतं तलाश्रं वा कलाश्रं युगाश्रम् (?) ।

तस्मादूर्ध्वे द्वैगुणं(स्यात्)सधारं धारालिङ्गं सर्ववर्णे प्रशस्तम् ॥

पूजाभागे सर्वतोभद्रलिङ्गे धारालिङ्गं पञ्चपञ्चक्रमेण।
एकैकस्यामष्टमं चोपरिष्टात् साहस्रं तद्रेखया लिङ्गमुक्तम्॥

रसमुनिवसुभागे वृत्तकेऽष्टाश्रकेंऽशे
परिधिरथ नवांशे लिङ्गतुङ्गे तु भूयः।
त्रिभिरथ गुणभागैश्च त्रिभिस्तुङ्गमानं
ह्यजहरिहरभागे तत्तु त्रैराशिकं स्यात्॥ ८४॥

सस्थूलमूललिङ्गं क्षयमध्यं वै पिपीलिकामध्यम्।
लिङ्गं तु शिरःस्थूलं ह्यार्षं लिङ्गं चतुर्भेदम्॥ ८५॥

निजविपुलाष्टांशघ्नं मूलं मध्ये तथा तदग्रे च।
विष्ण्वजभागौ सम्यक् चतुरश्रं चार्षके लिङ्गे॥ ८६॥

लिङ्गं फलकाकारं त्र्यश्रं पञ्चाश्रकं त्रिकोणं च।
एकादशनवषट्सप्ताश्रं च द्वादशाश्रं च॥ ८७॥

पूर्वोदितेतराश्रं शूलाग्रं श्रृङ्गसदृशशिरः।
अन्यदपि भेदयुक्तं सशिरः सूत्रेतरञ्चमानयुतम् (?)॥ ८८॥

निम्नोन्नतझर्झरकं वैवर्ण्ययुतं च पूजानिम्नोन्नतं यथा (?)।
वक्रमवक्रयुतं वा वालुकरेखाकलङ्कबिन्दुयुतम्॥ ८९॥

अथवैकरेखमेतान्युदितान्येव स्वयम्भुलिङ्गानि।
नैवैतेषां मूलं लिङ्गानां शोधयेन्मतिमान्॥ ९०॥

अज्ञानादपि मोहात् संशोध्य मूलमेव दोषकरम्।
आस्थापनमथो लिङ्गं पूजाभागं तु पीठसमम्॥ ९१॥

वृत्तं वाथ सधारं पूजाभागं तु मोक्षदं यमिनाम्।

लिङ्गलक्षणं समाप्तम्।

